कृष्ण:– कि तदाश्रयफलम् ?

यशोदा– भुक्त व्रजेज्जीर्णताम् ।

कृष्ण:– निद्रा का अम्ब ?

यशोदा– निमीलिताक्षयुगल प्राज्ञ [1] यदालिङ्गति । अस्त्वेव तत्रिनि श्रीकृष्ण. मुद्रितात्मनयन: स्वांगमेव समालिङ्ग्य तदनु मात. मया भुक्त सर्वं जीर्णम् । अथ पुन क्षीरादिक दिश इति जननी पृच्छन् कृष्ण. भक्तान् अवतात् ।

कृष्ण:– मात , गायसि कि सदा [2] जलनिधौ शेषाङ्गसशायिनम् ।

यशोदा– तात, असौ निद्रया परिव्रत दद्यात् तवापीति ताम् ।

कृष्ण– एव असौ निद्रावृतश्चेत् त्वदीयमखिल गदित तत्कर्णदेश कथ याति ?

इत्यनेन प्रकारेण स्वस्य परमात्मन: विनिद्रत्वमत प्रतिपादयन् यशोदासुत पायात् ।

दोलान्दोलनेन लोलाङ्ग्य: नीलोच्चलत्कुन्तला दोलाया: इतस्तत: सञ्चालनेन स्रस्तदुकूलहारवलया मौलिस्खलन्मल्लिका· क्वणदङ्घ्रि-भूषणगणा ईषच्चलत्कुण्डला: मृगदृश ता बाला गोप्य· लोलत्कङ्कण भूषितपाणिपद्मेन धृतया दोलया सह बाल श्रीकृष्ण व्यालोल कृत्वा प्रिय स्वसमीप निन्यु. । ये जना विठ्ठलसेवका: शुभधिय तेषा श्रीकृष्ण. लभ्य: इति ज्ञापयितुमिव त रज्ज्वाकर्षणकाले आन्दोलनकर्त्र्या गोपिकाया समीप प्रापयन्ती, ये वा विठ्ठलसेवका न भवन्ति तेषा स: दूरग: इति शिक्षयितु एन श्रीकृष्ण रज्ज्वाकर्षणत्यागसमये दूर कुर्वन्ती सन्मणि मण्डिता स्वानन्दमूर्ते शिशो श्रीकृष्णस्य सा दोला विजयते । स्तनोत्थ-दुग्धेन एव कृष्ण सुतृप्त निरूपयन्त्या: मातुर्यशोदाया: अस्मात् स्वल्पात् स्तन्यात् उदारदेहस्य मम न तृप्ति. इति शिक्षयन्निव स हरि: स्वमुखे जगन्ति प्रदर्शयामास । श्रीकृष्ण: स्ववदनद्वारा स्वोदरथं समस्त प्रपञ्चं

---

1) प्राज्ञनामक हृदिस्थित परमात्मनम् ।

2) दोलान्दोलनसमये नियमेन

प्रदर्शयामास । सगृहां सनाथां यशोदामपि तत्र लोकयित्वा जनन्यां स्थितां पुत्रमति[1] अखण्डयत्, विश्वपितृत्वबुद्धि च तस्यां अयोजयत् । "पित्रादय: मम नामकरण न कुर्वन्ति" इति नून कोपेन स: बाल. कृष्ण: पूतनादीन् विनिहत्य जठरे स्वशक्त्या विश्व मातु प्रदर्श्य बहूनि नामानि बभार ।[2]

श्रीकृष्णस्य नामकरणम्

अथ यादवानां पुरोहित गर्गाचार्य: नन्दगोपस्य गृह आगत्य विनतौ तौ सुतौ नाम्ना राम-कृष्णौ चकार । 'श्रीकृष्णस्य गुरु गर्गाचार्य' इति तद्गुरुत्वकीर्त्या चकित: तत्पापपरिहारार्थ भगवत. नाम राम कृष्ण इति जजापेति मन्येऽहम् । श्रीहरि केशवनारायणादि अनेकनाम धेयवान् । अथापि कृष्णसंज्ञा गर्गदत्ता अवाप्य तुष्ट· किलाभूत् । तथाहि शब्देषु बहूदितेषु प्रियेरित प्रीतिकरो हि लोके ।

यथा कृष्णपक्ष: चन्द्रमसं क्षीणकलं करोति तथा अयमपि सपत्नपत्नीवदनोडुराजं क्रमेण शत्रून् हत्वा विगतकान्ति तनोति । अत. परमात्मन: कृष्णसज्ञा गुणोचिता । यतोऽसौ ईश:स्वसन्दर्शनत नराणां वराङ्गनानां सुराणां चारणानां च सर्वाणि मनासि अपकर्षति । ततोऽपि तं सन्त: 'कृष्ण' प्रवदन्ति ।[3] विष्णो: कृष्णकेशात्मकत्वाच्च 'कृष्ण:' इति तस्य नाम युक्तम् । "कृषि: भूमि: तस्यामपि ण: सुखरूप. कृषे: भूमे: ण.·सुख रूप:, कृषे: भूमे: ण: सुखं यस्मात्स" इति वा व्युत्पत्या पृथ्वीतल संस्थितोऽपि सुखी, धरण्या: सुखदायकश्च[4] इति हेतोरपि त कृष्णं प्रवदन्ति । दैतेयकदम्बाख्यकक्षचयस्य विध्वसविधौ अयं मुरारि: यत: वनाग्निमन्वेति लयाग्निकल्प ततोऽपि एनं कृष्णं गायन्ति ।[1]

---

1) 'कृष्ण: मम पुत्र ' इति बुद्धिम् ।

2) पूतनाहननात् पूतनाघातक शकटवधात् शकटासुरभञ्जक:, तृणावर्त हत्यया तृणावर्तनषूदन; जठरे विश्वप्रदर्शनात् विश्वम्भर. इत्यादि बहूनि नामानि बभार ।

3) कृष् आकर्षणे इति धातो· ।

4) भूभारहरणेन सुखद: ।

व्रजाङ्गनानां स्मरतां मुनीनां अभेद्यहृद्यप्रणयाख्यदाम्ना निबद्धमृद्वङ्घ्रिसरोजयुग्मः श्रीकृष्णः दोर्भ्यां शुभजानुयुग्भ्यां चचार[2]। यः श्रीहरिः अनेकलोकानुदरे विधाय लयाम्बुमध्ये शेते स्म सः अधुना शिशुरूपः कृशोदरं संदर्शयितुं सलज्जः उदरं अधः कृत्वा जानुचरो बभूव। जानुचरः अङ्घ्रियुगं स्वचरणस्मरणं कुर्वतां मुनीन्द्राणां मनसा साकं कर्षन् व्रजस्त्रीदृशा[3] जम्बालेन च नीलनीलसुतनुः लोलालकश्रीमुखः कृष्णः यशोदां 'अम्ब अम्ब' इत्युदीर्य अङ्काधिरूढः सन् स्तनं पिबति स्म, किं वाऽतप्यत सा तपोऽस्य जननी यस्येदमीदृक् फलम्।

श्रीकृष्णः अन्यैः कथ्यमानं स्वनिर्गुणत्वं नानाविधवीर्यसौन्दर्यादिगुणोदयैः निरस्तवान्। व्रजस्थजनानां कृष्णसन्निधानेन निष्पन्नद्रव्यैः जगद्बाध्यतां निराकरोत्। निजतेजसा वैरूप्यं अच्छिनत्। निरुपमैरङ्गैर्निराकारतां निराकृतवान्। निर्मलधियां ब्रह्मनारदादीनां नित्यार्चया परब्रह्मणः स्वस्य नीचैक्यं निरस्तवान्। दिग्भ्यः भिन्नं अम्बरं (गगनं) अस्तीति यत्तार्किकमतं तद्धिक्रियार्थं दिग्वस्त्रतां दीपयन् गोकुले विठ्ठलः शुशुभे।

गोपीगृहाङ्गणतले रणदङ्घ्रिवेषः गोवत्सकैः सह चरन् रजसा अनुषक्तः देहाभिमानरहितैः दिवि संस्तुवद्भिः दयितासमेतैः देवैः दृश्यविभवः, शार्दूलरम्यनख[4] रञ्जितकण्ठदेशः सासूयानां दानवानां वनायमानानां नाशने हुताशः हार-स्फुरत्कङ्कण-नूपुरश्रीः हासप्रकाशितदिशापटलः नव्यस्खलद्वचननन्दितसर्वलोकः सुव्यक्तकुन्तलततिः सुभगाग्रगण्यः

---

1) व्यासार्जुनाग्निहरिकोकिलकाकशूद्रतामिस्रपक्षकलिनीलगुणेषु कृष्णः –भास्करः।

2) बद्धचरणो हि जानुभ्यां हस्ताभ्यां च गच्छति खलु।

3) स्त्रीणामपाङ्गस्य नीलत्वात् तत्सम्बन्धेन नीलतनुत्वं हरेः।

4) बालस्य दृष्टिदोषपरिहारार्थं कण्ठे शार्दूलनखराः निक्षिप्ताः।

दिग्वस्त्रदर्शितकटि दिननाथदीप्ति हृदयङ्गम स. शिशु कृष्ण. सदा मे हृद्गोऽस्तु ।

अथो "नारीणां गोपीनामपि मोक्षद., अनुष्ठिततपसां विशुद्धात्मनां अस्माकं तु मोक्ष किमिति नो दद्या" इति पृच्छतां योगिनां कोपवशंगतानां 'मया पूर्वं तासां क्षीरं मुष्टं अतः तासां क्षीरसमुद्र दास्यामि ।' इति उत्तर दत्वा तेषा कोप विधुन्वन्निव गोपस्त्रीनिकरस्य स्वं दुग्धजलधि दातुकाम हरि तद्गेहस्थितदुग्धमण्डलं मुष्णन् व्रजे चचार । हरौ पयो मुष्णति कापि गोपी तुष्टा । किन्तु मर्काय ददति सति अमर्ष दधार । तथाहि । अनन्ययोग्य कृष्णभुक्तशेष हरन्तं उद्वीक्ष्य कथ न मन्यु. । एकेन करेण ध्वनिनिरोधाय घण्टां प्रगृह्य अपरेण च करेण पय पात्र प्रगृह्य अन्येन करेण पयःपिबन्तं पुनरन्येन च मित्राणि तर्पयन्त हरि निशाम्य कापि सुविस्मिता गोपी तूष्णी बभूव ।[1] अन्या गोपाङ्गना करस्थभास्वन्नवनीतं मुकुन्दं विभीषयन्ती स्वमौलिमालाच्युतपुष्पपुञ्जैः ईशितुः तस्य पादानि[2] अर्चयन्तीव तमन्वगमत् । धीरः कृष्ण , दधिचौर्ये क्रियमाणे कस्याञ्चित् अधिक्षिपत्यां तस्याः पुण्येन साकं दधीनि चुचोर । श्रीकृष्णे पयः पिबति सति 'कृष्णार्पणमस्तु' इति आनतायां अगण्यपुण्याख्यधनानि प्रदाय दानी सः अचूचुरत् । पृथ्व्यां विनिन्दिताऽपि तस्करता यशोदातनयस्य भूत्यै अभूत् ।[3] एतत् युक्तमेव । लक्ष्मीनयनान्तभाजां असह्य दोषोऽपि गुणाय भवेत् ।[4] गोपबाल. कृष्णः स्वकीयचौर्यं नितरां गृणद्भ्यः[5] विमुक्ति ददौ किल । चौर्याख्यं स्वमर्मालपतां जनानां फलदानेन वाग्बन्ध प्रचक्रे इति अहृ प्रतर्के । यः हरि. बाल दिवानिश स्वभक्तपुञ्जार्जितपापवृन्द हरति स्म सः गृहे गृहे दुग्ध अमुष्णात् । तथाहि कस्त्वक्ष्यति सिद्धविद्याम् ।

गोपीकृष्णसंवादः

गोपी— हस्तः किं नवनीतभाजनमुखे न्यस्तः त्वया श्रीपते ?

---

1) करचतुष्टयेन कार्यचतुष्टयं कुर्वन्त दृष्ट्वा विस्मिता बभूव ।

2) पादचिन्हनि 3) कृष्णचौर्यस्मरणेन अन्येषा पापनिवृत्तिर्भवति ।

4) कृष्णस्य लक्ष्मीपतित्वात् । 5) कृष्ण नवनीतचोर इति वदद्भ्यः

कृष्णः– तन्वि, मृगाक्षि ! कोमलहृदः अस्य नवनीतस्य दृप्तप्रस्तरसंमितातिकठिनावस्थान्तराया. तव गृहे स्थिति न युक्ता । तत् मृदुनि मम चित्ते प्रीत्या स्थापयितुं मया हस्तः नवनीतपात्रे न्यस्तः” इत्युक्त्वा हसन् असौ श्रीकृष्ण. पातु ।

गोपाङ्गना– “यस्य श्रीचरणाम्बुजेन शकट सञ्चूर्णिताङ्गोऽभवत् तस्य तवाङ्गे मृदुता न युक्तियुक्ता”

कृष्णः– “बाल्ये शिशु मा वक्षसि अधिरोप्य सनर्तयन्त्या तव स्थूलोरोजसमागमेन तत्काठिण्य पादयो सञ्जातम्[1] इति वदन् शिशुः सः अस्माकं प्रौढि दद्यात् ।

गोपी– “अङ्ग, कृष्ण कितव भवन्त अद्य बध्नामि”

कृष्णः– “प्रिये, साध्यं तत किम् ?”

गोपी – “कपटसन्नद्धे त्वयि निबद्धे दुग्धानां परिरक्षणम् ।”

कृष्णः– हे मुग्धे, पद्माक्षि, विरसा त्वं मां मुञ्चसि । परन्तु स्निग्ध[2] तद्दुग्ध न मां त्यजेत्– इत्युदीर्य अबलां वशयन् सः मम बुद्धि दद्यात् ।

ततः क्वणन्नूपुरशोभिपादा. विदग्धैरनुमेयमध्याः शुचिस्मिताः कुण्डलशोभिगण्डा व्रजाङ्गनाः तस्य कृष्णस्य चौर्यादिचरितानि मातुः यशोदायाः न्यवेदयन् । “हे यशोदे, यदा ते आत्मजः पात्राणि विभिद्य दुग्धं पिबति स्म तदा उत्सर्पितदीय-दन्तदृगन्तकान्ति हृदि तर्कयन्त्याः मम मन्यु. न आसीत् ।” “सखि यशोदे, पय. प्रमुष्णन् ते अयं सुतः भर्त्सनार्थ समागतानां गोपीनां अस्माकं चेत. अपहृत्य (चेतसोऽपहृतत्वात् स्तम्भीभूतानामस्माकं) कण्ठ अवलम्ब्य स्वप्रयत्नेनासाध्यानि दूर स्थितानि दुग्धपात्राणि स्वैरं जिघृक्षति ।” “हे कृष्ण, यदि त्वं ईदृशं चौर्यादिकर्म करोषि त्वं नन्दस्य सुतः न किन्त्वन्य एव” अस्माभि. इतीरते “हे यशोदे हन्त स केवल हसन्[3] नः बहूनि अनिष्टानि तनोति ।”

---

1) न तु मम हृदये । 2) स्नेहयुक्त इति ध्वनिः ।

3) अजन्मज कृष्णस्य न नन्दपुत्रत्वम । अत एव हासः ।

कृष्ण "इद, दुग्धादि देवस्य समर्पणार्ह," इतीरितेऽस्माभि "तर्हि अहमेव देव" इत्थ[1] अभाष्य स तदेव भुक्ते।" हे देवि यशोदे तव पुत्र न देवभक्त." "हे देवि, अय कृष्ण गृहे गृहे नवनीतदुग्धदधीनि सर्वाणि अप हृत्य भुक्ते। तथापि तव सुत तृप्ति नैति। अस्य कुक्षौ भूतानि[2] वसन्ति किम्?" "त्व इहास्मद्गृहमेत्य बद्धान् वत्सान् न मुञ्च" इतीरिते हे पुण्यपदे यशोदे, ते सुतः स्मितोल्लसद्वक्त्र ममाय स्वभाव. इति उत्तर-मदात्"[3] "अङ्ग उलूखल इत कस्मात् नयसि?" कृष्ण– स्निग्धं दुग्धस्य पात्रादधः स्थापयितु। गोपी– "ततश्च किं"– इति प्रोक्ते प्रभुः य "हे मुग्धे अग्रसुजातसुस्मितपय पात्राननस्य तव मध्यस्य उपमां वीक्षयितु इति अगदत्–"हे यशोदे तव सुत. दुष्कर्मणा गूहने पटु।"[4] "सखि यशोदे तव सुत क्वचित् करेणैव दुग्धभाजनं समीक्षते। क्वचित्पादेनैव पृष्ठत समागता. अस्मान् पश्यति। एतादृश तव बालकः विश्वतश्चक्षुरिवास्ति।[5] त उलूखले यदि बन्धयाम. तदा बालः उलूखलमेव नयेत्। गृहस्तम्भवरे निबद्ध असौ कृष्णः ध्रुवम् गृहाणि पातयितु समर्थ.।" "अस्य विश्वम्भरस्य हि बन्धनाय दामानि सम्पाद-दयितु क ईश? यदि कथचिद्बद्ध. तर्हि मध्ये विलीना वयमेव हि बद्धाः।[6] "हे यशोदे, अहो, तवाय बालक गृहे गृहे अत्युष्णमपि दुग्ध पिबन् कदापि तापं न लभते। किमस्य वक्त्रे जलराशिरास्ते?" "तव शिशुः दूरस्थितं

---

1) स्वस्यैव देवत्वात् देवभक्तत्व नास्त्येव।

2) अस्य कुक्षौ ब्रह्मराक्षसादि भूतानि वसन्ति किं इति भाव तत्व तु पञ्चमहाभूतानि तस्य कुक्षौ वसन्त्येव।

3) बद्धाना मोचन भगवत्स्वभाव।

4) उपर्यधोविस्तृतस्य मध्ये कृशस्य उलूखलस्य उपरि हरिद्रादिरञ्जित पय पात्रे निहिते उपरिस्थितमन्दहासोपेतकुङ्कुमासक्तमुखस्य तव मध्यस्य उपमा भविष्यतीत्याह।

5) विश्वतश्चक्षुरुतविश्वतोमुख इति श्रुति।

6) विश्वम्भरस्य बन्धने तत्रस्थाः वयमपि बद्धा एव। नित्यमुक्तस्य खलु तस्य नास्ति बन्ध।

दुग्धभाण्ड विलोक्य उलूखलाद्यं गृहीतु यतते । क्वचित् एधते एव। अहो किमेष गूढाष्टमहाविभूति ?" "हे यशोदे तव विलोलनेत्र पुत्ररत्नं प्रति अस्मद्वक्त्रान्न निष्ठुरा वाक्समुदेति । ताडयितु न. करः नोदेति। ध्रुव सुतस्ते जगतां नियन्ता ।" तव एष बाल. अन्धकारार्पितमपि दध्यः मत्र स्वकीयया भास्वन्नयनान्तलक्ष्म्या निरीक्षते । किमेष. तव बाल-लोचनयोः पुष्पवन्तौ बिभर्ति?" "यशोदे मन्त्रात्मा सः कृष्णः पिहितं चेत् कवाट आशु विवृत कर्तु समर्थं, नित्यविमुक्तिदः सः अस्मत्कृतबन्धनं वृथा रचयितु समर्थं । कठोरवचसागस्माक विस्मापनं कर्तु अयं जगत् वक्त्रे दर्शयितु समर्थ. कर्हिचित् बद्धश्चेत् तद्घटपिनः[1] पाटयितु समर्थः हे देवि वयं कि कुर्म ?" इति भाविविमुक्तिबीजं सुराधिराज श्रीकृष्ण सकीर्त्य व्रजस्त्रिय. विलोलनेत्र त अवेक्ष्य अनेकभावाः वाचः शनैः अलंचक्रुः स्म ।

सदा सदानन्दसुतृप्तवृत्तेः मम भवद्गृहस्थैः नवनीतमुख्यैः वस्तुभिः एषा मृत् समा इति शसन्निव स्ववशः अखिलेश अयं कृष्ण. मृद जघास । मातु यशोदायाः समक्ष गोपीभिरापादितचौर्यकर्मा त्रिलोक्यां महितः वासुदेवः अत्र मृद्भक्षणे मम चोरत्वं न कथयन्ति किल इति ज्ञापयन्निव आक्रोशेनेव मृत्स्नामादत् ।। श्रीकृष्ण मृदं समास्वाद्य आस्यदेशे मातुः यशोदायाः जगन्ति प्रदर्शयामास किल । रसया (भूम्या)[2] सुपात्रे कृष्णे प्रदत्ताऽसौ मृत् सहस्रधा फलितेत्यहं मन्ये ।

रोम्णा हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते
सञ्जात. सुरमण्डलीषु महितः सर्गस्तृतीयो मुदाम् ।।

---

1) अनेन एण्यद्यमलार्जुनभङ्गादिकं सूचितम ।
2) भक्तिरसभरितयेति ध्वनि

## चतुर्थः सर्गः

प्रभु: श्रीहरि: वैराग्यभाग्यानां प्रिय.। ज्ञानानुमोदी । भक्तैकवश्यश्च । एष: एकदा प्रात: दधिमथनासक्तां जननी मन्दमुपाजगाम । दधिमथनकाले सव्यदक्षिणत: अङ्गचलनेन केशबन्धस्य श्लथनात् कबर्या: प्रसूनानि उद्गच्छन्ति स्म । सा सद्भि: गीतस्य कृष्णस्य यशो गायन्ती आसीत् । दध्नो निर्मथनोद्यतं नवनीतं कृष्णायार्पयामीति समुदितप्रेमाश्रुधारा अभवत् । एतादृशी जननी हरिरुपाजगाम । अङ्कोज्झितेन्दुप्रतिमाननं त कृष्णं अङ्कं समारोप्य मनोज्ञाङ्गगत पङ्क मुहुर्मृजन्ती सा यशोदा क्षुधार्तशङ्का स्तनक्षीरमपाययत् । तदनु दहनस्य वेगात् उत्स्रवत: क्षीरस्य लोभात् सा यशोदा तं मधुजितं तत्रैवापहाय तं परमात्मा इति अजानती पय:संरक्षणार्थं जगाम । हरिरपि स्वसेवां परित्यज्य गतायै यशोदायै हानिं प्रदातु पाषाणखण्ड क्षिप्त्वा दधिभाण्डं व्यभजत । स कृष्ण: जनन्या अदृष्ट: सन् स्वनीतं नवनीतं बिडालाय ददौ । नूनं देव. धनलोभभाजां धनानि अनर्हेत्सु अतिविश्य क्षिणोति । अथो माता तं अदृष्ट्वा क्व गत: इति विचारभारार्पितमानसा विमर्शलभ्यं तं अनुव्रजन्ती, परानुयात्रार्जितपुण्यपात्री यशोदा अगम्यमपि तं अस्पृशत् । यस्य नाम स्मरतां जनानां असह्य. दण्डवाणिर्यमोऽपि बिभेति तं श्रीकृष्णं विश्वसृजां ब्रह्मादीनामापि प्रभुं नन्दराज्ञी किल गृहीतदण्डा सती अभीषयत् । यस्य रोमकूप एव अजाण्डकोट्याश्रय: तं कृष्ण आत्तकोपा किल नन्दगोपी बद्धुमियेष । अहो रोषरुद्धं मन: अमरानुभावमपि दु:साध्यमिति न हि मिनोति । कृतागसं कृष्णं बद्धु माता यशोदा नैव शशाक किल । श्रीकृष्णरम्योदरमध्यसंस्थानां विमुक्तानां[1] शक्त्यैव तस्य बन्धो नासीदिति तु मम प्रतर्क: । यशोदा कृष्णं बद्धुं आगता । किन्तु आनीतं दाम किञ्चिदेव ऊनं बभूव । इत्थं स्वप्रसुवं मुहु: साशां विधातुं ईशत्वमपि [2] आत्मगतं विधातुं तदात्तदाम स्वात्मनि किञ्चिदूनं दर्शयन्

1) बन्धोज्झितानां

2) कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यरूपस्य ईशत्वस्याभावे तदात्तसकलदाम्न. किञ्चिन्न्यूनीकरणायोगात् ।

बन्ध रुणद्धि स्म । "अत्र शिशुरपि विस्मापनशक्तियुक्तः कृष्ण. न मे सुतः किन्तु साक्षाद्धरिरेव इति प्रबोधे अङ्कुरिते सति नन्दस्य पुरंध्री बुधैः प्रणयाख्यरज्ज्वा निबद्ध तं बलानुजं बबन्ध । असाध्यभागस्थितदुग्ध-चौर्ये विशारद त विनिबध्य तस्य चौर्यकार्ये सहायभूतस्य उलूखलस्यापि मध्य सा माता बबन्ध । श्रीकृष्णः कार्यवशात् जनन्या अनाहि । असौ तु उलूखलेन साकमेव प्रतस्थे । किं कर्तुं ? स्वकयोः नलकूबरमणिग्रीवयो अनिष्ट उलूखलेन घृष्ट विधाय अभीप्सित दातुमिव । स्वेन असज्जनेषु आचरितां उग्रशिक्षां स्वभक्तपुञ्जेषु च कृतां रक्षा नभसि गातु उभौ चिकीर्षन्निव सः द्वौ पादपौ विपाटयामास । स्वभृत्यं भीमानुज प्रियं अर्जुन दयया अद्वितीय विधित्सुरिव देवः कञ्जायतमञ्जुनेत्रः कृष्णः अर्जुनसञ्ज्ञितौ तौ भूरुहौ बभञ्ज । कृष्णस्य अङ्गे सः उलूखलरूपः बन्धः आसीत् । तत्प्रतिबन्धपुण्यबलेन सिद्धौ ततः वृक्षशरीरात् उत्थितौ नलकूबरमणिग्रीवौ वृन्दावनवल्लभ त कृष्णं प्रशस्य मनसि त स्मरन्तौ स्वलोकमीयतु. ।

स्वस्य सन्निधानाद् नन्दव्रजं महापुरीमाम्य प्राप्तम् । अतः वन-प्रियः असौ रमेशः मनाज्ञवृन्दावन एव वासं चकमे । विरोधिनः दैतेयाः तृणावर्तादयः कृष्णेन संहृताः किल । तेन कृष्णबान्धवाः नन्दादयः निर्भय गोकुले एव सवस्तु ककमिरे । प्रभुः कृष्णः वृन्दावनं जिगमिषुः स्वप्रियाणां तेषा साध्वसाय रोम्ण. अनेकान् वृकान् ससर्ज । "इह गोकुले स्वकीयान् दैत्यान् निहतान् निशम्य दैत्याः स्वेषां पराजयहेतुस्थानबुद्ध्या गोकुले मां न प्रतियान्ति" इत्थ आलोच्य सः विभु. स्वकीयान् वृन्दावन-मेव गन्तु न्ययुङ्क्त । कृष्णस्यादेशानुसार सर्वेऽपि अरण्यालयाः गोपा. स्वकोयान् भाण्डादिभारान् शकटश्रेण्यामधिरोप्य गोधनैः वृद्धैः मुग्धलल-नाभि. बालादिभिश्च संयुताः वीणावेणुमृदङ्गशृङ्गानां निनदैः सम्पू-रिताशाः सन्त बलराम श्रीरमणाश्रयाः शनैः पावनं वृन्दावनं प्रति ययुः । तदा जृम्भच्चम्पकगुम्फितोच्चकबरीभाराः चलत्कञ्चुकाः सिञ्जन्मञ्जुल-भूरिभूषणधरा. गृहेषु क्रियाः समाप्य प्रस्थिताः गोप्यः पथि स्वासां

रासक्रीडाद्यभीष्टाप्त्युचितस्थलीगर्ति प्रेक्ष्य प्रहृष्टाः इव रामचरितै. साकं कृष्णस्याद्भुतकर्म कृत्स्नशः जगुः । वृन्दावनगमनसमये गवां खुरैः गोपपदैः अनोभिश्च समुत्था धूली सवितुः करौघं रुरोध । सूर्यः एव तां विष्णोः वैष्णवानां च पवित्रां पादधूलीं स्वमूर्ध्नि वोढुं ध्रुवमुन्निनाय । वृक्षगणाः पुष्पैः, कीराः मनोज्ञवचनैः, कोकिलाः सुस्वरैः, केकिवरा नृत्तैः, गजाश्च मन्दगतिभिः, शैलाः स्रवन्निर्झरैः, सा वृन्दावनभूः सुच्छायैः मणिकुट्टिमस्थलच्चयैः, मृगाश्च ईक्षणैः तदा अच्युतागमनकाले तद्वृन्दावनं तदर्हभवनं नूनं आतेनिरे ।[1] कृष्ण मधुरायां लब्धजन्मा । ततः कतिचिद्दिनानि नन्दव्रजे अभिवृद्धः । अधुना वृन्दावनमुपेत्य एष कृष्णः स्वस्य त्रिधामतां[2] दर्शयतेवाभवत् । फलैः, प्रसूनैः पयसा तृणेन गोगोपनिकाय रक्षा विधाय वृन्दावनं[3] स्वनामानुगुण बभाज । हरौ प्रसक्ते किमिहास्त्यसाध्यम् ? वृन्दावनप्रवेशानन्तरः कृष्णः भविष्यद्वृत्सदत्यरण अनुशिक्षन्निव चारूपल्मुत्क्षिपंश्च वृन्दावन चचार । प्लवङ्गवेषैः अनुगैः समेतः सः देवः सेतुबन्धादिविहारशीलः अरण्ये चरन् स्वकीय रघुरामरूप आज्ञापयति स्म ।

कदाचित् तस्मिन् वृन्दावने सहानुगैः गोपैः गाः चारयन्तं तं कृष्णं प्रति पशुवेषधारी खलः अभ्यगात् किल । महान्तं कृष्णं प्रति युद्धाय यास्यतः अस्य दैत्यस्य पशुत्वं[4] आजनजमेव इति मन्ये । 'सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्' इति लक्षणात् शार्दूलविक्रीडितवृत्त, प्रथमतः भूदेवताकः मगणः ततः मरुद्देवताकौ सगणौ, सगणयोर्मध्ये सूर्यदेवताकः जगणः तदनु आकाशदेवताकौ तगणौ– इत्येतैः गणैःविराजते । वत्सासुरसंहारे च लक्ष्मीशः शार्दूलविक्रीडितं अनुकरोति ।

1) पुष्पोपहार– मधुरवचन–गीत–नृत्य–गति–विलासोदक– सुच्छायाद्युपचारवत्खलु राजभवनं, तत्सर्वं वृन्दावनेऽप्यभवत् ।

2) अनन्तासन–श्वेतद्वीप-वैकुण्ठाख्य त्रिधामतां

3) वृन्दस्य अवनं (रक्षा) यस्मात् तत्

4) स्वपरसामर्थ्यविवेकशून्यत्वलक्षणं

कृष्णः प्रथमतः पदयोः रुचा भूगणं (भूप्रदेशं) अलञ्चकार। पश्चात् वृन्दा वनगत मरुद्गण च सञ्चरणजनितश्रमपरिहारार्थं वरयन्, ततः अन्तर्वन पदरुचा भास्वद्गणशोभिकुर्वन्, लेखानां सवयसां च हृदयाकाशं चाश्रयन् सः व्याघ्रस्य विक्रीडन अनुकरोति ।[1] हरिः तं दैत्यं आत्मदोर्भ्यां गृहीत्वा उपरि कपित्थवृक्षस्याग्रे उदक्षिपत् । सः वत्सदैत्यः आशु अधः पपात । स्वरक्ष्यवत्सवेषधारिणः ऊर्ध्वगतिप्रेषण व्रजाधिनाथस्य धर्म एव । गृहीत-मायस्य वत्सासुरस्य अधःपातोऽपि युक्त एव । सः वत्सासुरः वृक्षात् अधःपतन् स्वपार्श्वाभिघातेन लोलद्रुमसञ्चयेभ्यः कपित्थफलानि पातया मास । तथाहि कृष्णप्रतिपक्षिपक्षः कथं न पातैकफलस्त्रिलोक्याम् ?

अथ संसारवृक्षः भर्तृरागः भार्यायां भार्यारागः भर्तरि इति अन्योन्याश्रितरागरूपरज्ज्वा विततः अत एव अभेद्यश्च । एतादृशवृक्ष निबद्धाः अब्जजमुखाः सुपर्णाः । तान् प्रतिकल्प संगृह्य परमात्माऽय भुङ्क्ते । इत्थ कृष्णः विश्वाद्भुतलुब्धकः तं मीननतनुं[2] श्रुत्वा बकपक्ष्याकारः कश्चिदसुरः भक्षयितु मीनतनु तिमिङ्गिल भक्षयितु व्यत्यस्तबुद्धिः बकपक्षिरिव आययौ । "हे कृष्ण, मम जिह्वा त्वन्नाम न कथयति" इति व्यात्त आस्यमादर्शयन् "अहं कृष्णपक्षः[3] न" इति विशदयितुं स्वौ पक्षौ प्रोत्क्षिपन् विष्णुसम्बद्धवृन्दावनभूप्रदेशसम्बन्धभयनेव अङ्घ्रियुग्मं पश्चाद्भागे विधुन्वन्, गगनमपि ईशकेशं मत्वा[4] (ननु विष्णुपदमिति) व्योमाध्वनाऽसौ बकरूपदैत्यः सत्वरः यदुकुलतिलकं प्रति अभ्याययौ । ततः खलोऽसौ हरिं प्रजग्रास । बककुक्षिगतः कृष्णः प्रज्वलन् तस्य कण्ठान्निर्गच्छदुच्छ्वास रुरोध । पुनः सः खलः तदौष्ण्यमसहमानः बहिः चच्छर्द । अथवा पापिनां हृदये नाहं वसामीति दर्शयन्निव तत्खलस्य अघपूर्णात् हृदः कृष्णः निरक्रमीत् । कृष्णः सर्वान् दैत्यान् शकटेन तमः

---

1) वत्सस्य संहारे शार्दूलविक्रीडितस्यानुकरणं युक्तम्

2) मत्स्यावतारवत्वात् ।

3) कृष्णस्यमित्रं, कृष्णौ पक्षौ यस्य सः ।

4) व्योमकेशो भवो भीमः–कोशः

प्रेषयितु सकल्पयामास । तत्र शकटासुर एव शकट., तस्मिश्च पूतनां बालग्रहरूपिणी रज्जुग्रहीं सकल्प्य, तस्य शकटस्य वाहान् रासभरूपी खरः, अश्वरूपी केशी, वत्सरूपी वत्सासुरः बलीवर्दरूपी वृषभ. इत्येतान् मनसा निरूप्य निःशषदैत्यामुवत् अनिलरूप दैत्य सयोज्य अधुना अद्भुत बकं तच्छिद्द न तम प्रपद्यन्निव हस्तगबकः कृष्ण. शोभते स्म । हरि. त पतत्रिणं दोर्भ्यां परिगृह्य तुण्ड विभिद्य, भूमौ विनिपात्य यातनारूप मीनभुज विधातु नारकवापिकासु न्ययोजयत् ।

ततः वसन्तमरुता मर्दितघर्मबिन्दु चामीकरचारुवासाः प्रसूनवत् मृद्वंघ्रितलः अम्बुजाक्षः सः कृष्णः परितः वसन्तश्रियं पश्यन् चचार । कामी खलु बर्हाक्षी पुष्पायमानमुखीं, अलिकुलवत्फुल्लालकां पल्लवप्रान्तस्कन्धभुजां, लतामृदुतनु रक्ताम्बरेण रञ्जितां माद्यत्कोकिलसुस्वनां शुकवचशाटूक्तिपुलां, पलाशाधरां सुन्दरीं कामिनी ऋतुमतीमपि उज्झितुं न शक्नोति । तथा हरिरपि वनदेवतां उज्झितु न शक्तोऽभूत् । कुसुमसञ्चयकम्पनचुञ्चुना सजलशीकरेण दक्षिणवायुना व्यजन पाणितलेव वनरमा नरमानसमण्डनं तं कृष्णं अन्वगात् । पिकगणः परिलसतः सहकारस्य नवाङ्कुरे शनकै ध्वनन् स्मररहस्यमन्त्रान् सञ्जपन्निव शुशुभे । कुसुमचुम्बनकृत् मधुरध्वनिः षट्पदः बत मधुरवचनेन "अब्जमुखीसरसाधरं पिबत । इह मानः मा उचितः" इति प्रियजनान् शिक्षति । पथिकाङ्गना मरुति वाति सति प्रियस्मरणजन्यशुचा अमु वायुं पथि संस्पृशन्[2] मम पतिः वायुमनुसृत्य गतैः अलिकुलाख्यालिकुलैः अभ्युदितां मम वेदनामवैतु इतीव नयनवारि वायौ युयोज । मधुना

1) वनदेवताऽपि वसन्तर्तुना संशोभिता । तदा मयूरा उत्क्षिप्तपुच्छा नृत्यन्ति स्म । तत्पुच्छबर्हाणि तस्या नयनानीवासन् । विकसितानि पुष्पाणि वनदेवताया मुखान्यभवन् । अङ्कारशोभिताश्च चलद्भृङ्गा. तस्याः कुन्तलवत् विलसन्ति स्म । पल्लवप्रान्तप्रकाण्डाश्च भुजस्थानीया अवर्तन्त । लता एव तस्या मृदुतनु । रक्ताम्बरेण (रक्ताकाशेन) रञ्जिता सा वनदेवता । माद्यत्कोकिलानां निनादः तस्या एव सुस्वन. शुकानां वचांस्येव तस्या. प्रीतिवचनानि । पलाशपुष्पाण्येव तस्या अधरम् ।

2) वायो. सर्वत्रगमनसम्भवात् ।

नियुक्त. भुजङ्गचय[1] योषितां अतनुतेजसि स्तने नूत्नशिव रहसि[2] रचयन्निव नखपदेन्दुकलां, वसनच्युतिं तनुते। मृगमदेन नीलकण्ठतां करयुगाख्यअम्बुजेन अम्बुजवेष्टितमूर्धतां हृदयमन्दिरतां सम्यगदृश्यतां स्वकैः चिरतान्तमुखैः रुचिरतां च वितनुते। अस्मिन् वसन्तकाले मदन_ वन्हिसखः प्रियशीतलः कुसुमगन्धवह. गन्धवाहः उपारतमन्मथसंगरे. परितप्तमुखैः नरै. परितः सेव्यते किल। मधुमासः स्वाधीशं कामं जनयिष्यतः[3] कृष्णस्य हृदयं व्यग्रं विधास्यन्निव मरुता दाक्षिण्यं[4], परागै राग, पिकै माधुर्यं, शुकचयैः प्रियभाषण, भृङ्गैर्गीतानि, सन्मधुना स्नानं, कुसुमैश्चार्चनं तरुच्छायया छत्रं च प्रकटीकरोति[5]। वसन्तकाले वनितासहाय मर्त्याः लषन्ति इति किं विचित्रम्? यतः तदा तरवोऽपि सरागाः सन्त. वाताचलिताः तन्वीः लताः न त्यजन्ति। अधरपाणिपदूर्जितपल्लवो मधुरवेणुरव कलभाषण. वदनगन्धवहश्वसनः सकुसुमः अच्युतः कुसुमाकर अजयत्[6]।

कृष्णशरानुगमण्डली वृन्दावने क्वचित् विततपल्लवफुल्लवने तरुतटे वसत अस्य कृष्णस्य पदाम्बुज जगतः भुजगतः[7] अभयसिद्धये

1) मधुना (वसन्तेन) सुहृद मदनस्य बिनाशकस्य शिवस्य प्रतिशिवं कर्तुं प्रेरित। शिवनिर्माणे तदाभरणत्वेन तत्परिचितभुजङ्गानां सामर्थ्यमस्तीति द्योतनाय विटपदे भुजङ्गचयः इत्युक्तम्।

2) बलवद्विरोधस्य प्रकटतया कर्तुमशक्यत्वात्।

3) कृष्णपुत्र प्रद्युम्न एव काम

4) दक्षिणादिग्भवत्व सरलत्वं च

5) अनेन उद्दीपनविभावा. लोकनीतयश्च दर्शिताः।

6) कृष्ण पल्लवायमानाधरपाणिपदः। कोकिलध्वनिवत् वेणुनिनादवान्। पिकवत् मधुरभाषणवान्। मन्दमारुतवत् तन्मुखवायु.। शिरसि धृतकुसुमोऽपि स। एव पल्लव-कोकिल-पिकभाषण-मन्दमारुत पुष्प शोभित मासद्वयपर्यन्तमेव वर्तमानं वसन्तं अच्युत सर्वदा संशोभित. अजयत्।

7) कालियसर्पत.

उपचचार । सर्वविदां ब्रह्मादीनां वर. सः कृष्णः धृतशिखण्डेन शिखण्डेन मण्डित. सन् करिष्यमाणस्य फणिफणाङ्कणनर्तनस्य कौशलाभ्यसनधीः इव क्वचित् शिखिताण्डवमन्वकरोत् । मुनिमन सरसीरुहहंसराट् सः कृष्ण. तदुचितस्य (हंसोचितस्य) स्वरस्य शिक्षणधीरिव हंसकम्बकस्य श्रुतिमनसोः अतिमनोरमं कूजितं अनुननाद ।

उष्णभा मधुना वशीकृतचित्त इव वरुणपालितदिगाख्यमृगाक्षी समधिगम्य तद्दुरितेन वारितवाजिवेग इव दिवः स्व अपीपतत् । मुदितगोनिकरै परिवारित सखिजनै सह वेणुमुदीरयन् निशामुखे निजगृह प्रविशन् नरमणिः स. कृष्ण. रमणीः समहर्षयत् । सकुतुकाभिः प्रमदाभि प्रतिगृहं इतस्ततः परिसेवितः स्मितकटाक्षमनोरमविभ्रमः असौ स्मरजनिः कृष्णः रजनीश इवाबभौ । सः यदुपतिः निजैःसह निर्मलं स्वगृह शनैरेत्य महितया सतां हितया तनुरुचा अलसां निशां बहुदूरपलायितां व्यतनोत्[1] ।

'अद्य हरि. करुणया स्वतनयां सरितं विपवर्जितां करिष्यति' इति मुदा परवशः रवि. ईक्षितुमिव रवशोभितं गिरिं आरुहत् । तदनु स भुजगान्तकवाहनः विभु. भोगिकुलाग्रगं अग्रज हि विसृज्य तदन्वयसम्भवं कालियं नमयितुं सभुजगां यमुनां अगमत् ।" "यदि कालियः रसातलमेति तदा तं दमयितुं अहमपि तत्र एमि" इतीव सवयसां विस्मयकारकः कृष्णः कदम्बपादपात् अम्बुनि वयसां वल्लभः गरुड इव अपतत् । तदा स्निग्धा अर्कजा सा यमुना कृष्णालिङ्गनकातरै. करसमै. निवृत्तै. ओघैः इव, स्वप्रान्ते स्थितं तस्य पदाङ्कं उरसा धर्तुं धिया इव, सुप्रेमाम्बुधिमिश्रणादिव जगद्बन्धस्य पातादिव मदनाकृति[2] तं कृष्णं स्वहृदयेन आश्लिष्य अवर्धत । फणिपतिः अपः कलिलयन्तं पुरुषोत्तमं दंशितुं अग्रहीत् किल। श्रवणोज्झितः सः परमया रमया श्रुतिभिः स्तुतं तस्य बलं न वेत्ति ।

---

1) प्रातःकालो जात इत्यर्थः ।

2) मदनस्य आकृतिः यस्मात् सः तम् ।

तदा उत्पाते चकिताः गोपाः कृष्णसन्दर्शनार्थिनः बलरामं पुरोधाय शेषमार्गगाः मोक्षगन्तार इव वृन्दावनात् यमुनातटं ययुः। "व्रजगोपालाः अमुना अध्वना यमुनां व्रजाम। पथि कृष्णस्य पदानि लक्षणैः सह लक्ष्यन्ते" इत्थं विमर्शिनः प्राप्तान् स्वान् दृष्ट्वा सः कृष्णः सर्पमूर्ध्नि ननर्त किल। सुहृदागमने कः न नानर्ति ?

लोकवन्द्यः कृष्णः सरत्नेषु कालियफणाङ्कणेषु गरुत्मतः करयोः मुख्यदैवं स्वपदं तद्गमने औषधं विधित्सन् इव ननर्त किल। कालियफणीन्द्रस्य विराजिपुच्छं एकेन करेण उन्नीय श्रमेण खिन्नं अस्य विषदूषितं वक्त्रं ममर्द। कथम् ? अन्तराश्रितं अशेषं असह्यं विषं विनतेन आननेन निष्कासयन्निव। स कृष्णः कालियस्य मुखं विभिन्दन्नपि तदीयं पुच्छं करेण जगृहे। ननु यथापराधं दण्डदाता शौरिः निरागसं कं न वरयेत्[1] ? आर्तबन्धुः श्रीहरिः अहिराजमौलिं विदारयन्नपि तं करेण पस्पर्श। निजेषु शिक्षाऽपि तस्य विष्णोः परं परानुग्रहहेतुरेव। भृत्याः भवाब्जासनमुख्यदेवाः नृत्यन्तं निजनाथं एनं कृष्णमेत्य आर्तसर्पाश्रिताज्ञानं अपहर्तुमिव गृणन्तः विष्वक् तस्थुः किल। अनीनदत् पद्मभवो मृदङ्गम्। जगौ हनूमाञ्जगतामधीशम्। अदर्शयत्तालगतीः कपर्दी। ननर्त गोपालकबालमौलिः।

ततः अहिपत्नीप्रियमञ्जुवाक्यं निशम्य कृष्णः तं कालियं आशु निर्भयं चक्रे। तथाहि। नारीमृदुभाषणेन कस्य चित्तं मृदुतां न उपैति। सः कृष्णः कालिय-कालिन्द्योः विषाश्रयत्वेन, नीलगुणत्वेन, कृष्णः कृष्णा इति नाम्ना साम्ये अपि तं भुजङ्गमं निपीड्य भास्वत्तनयां जुगोप। न कस्य योषित्सु हि पक्षपातः ? सः कृष्णः आगस्कृतं नागपतिं पादेन तत्कृताङ्कैः तस्य तार्क्ष्याद्भयं जहार। भवते कोपोऽपि देवस्य वरेण तुल्यः। असौ कृष्णः सर्पस्य विमर्दनात् स्व-पक्षपातिनः गरुडस्य नूनं प्रियं प्रसाधितवान्। तथा अन्ते कालियस्य गरुडात् अञ्जसा अभयं विधाय स्वतल्पाय शेषाय च अनल्पां मुदं ददौ।

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते
सञ्जातः सुरमण्डलीषु महितः सर्गश्चतुर्थो मुदाम् ॥

---

## पञ्चमः सर्गः

दयालुः ईशः सः यामुनाम्भसि अवगाहनोत्थं शरीरशैत्य शमयन्निव वृन्दावने निशि प्रवृद्धं नवकाननाग्नि स्वजनस्य गुप्त्यै पपौ । मुरारेः वनवन्हिपानकृतानुभावं सर्वे स्तुवन्तु न वयं स्तुमः । स्वजन्मभूमि[1] शिखिनि प्रविष्टे तेन ईशितुः कः कृतोऽनुभावः । ततः अच्युतः निजपादाब्जभजनैः स्वजनैः सहितः, आर्जितसर्वार्थिव्रजं व्रजं निविविशे ।

### ग्रीष्मर्तुवर्णनम् :

निदाघः निजबलकरं[2] अग्निं कृष्णपीतं निशम्य कोपात् ज्वलित इव सूर्येण सहितः सन्[3] प्रादुरासीत् । अथ गोपः कृष्णोऽपि स्वकार्यं सनाम्ना[4] ऋतुपतिना सह विचिन्त्य निर्निनीषुरिव द्रुतं वनान्तं प्राप । भास्वत्प्रभासम्भवे तापे तद्वृन्दावनमाधवेन (वसन्तेन) विजिते सति[5] दावे च व्रजमाधवेन दमिते सति ग्रीष्मः कोपेनेव वसन्तपुष्पनिचयं शुष्कं

1) ‘मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत’ इति श्रुत्या भगवन्मुखं अग्नेरुत्पत्तिस्थानम् ।
2) ग्रीष्मः दावाग्निना लोकान् सन्तापयतीति ग्रीष्मबलकरोऽग्निः ।
3) एकस्मिन् सहाये गते सहायान्तरेण कार्यं साधयामीति बुध्या ।
4) माधव इति वसन्तस्यापि नाम, एकनाम्नोः सदा प्रीतिरिति च प्रसिद्धिः
5) तरुच्छायादिना

तदा उत्पाते चकिताः गोपाः कृष्णसन्दर्शनार्थिनः बलरामं पुरोधाय शेषमार्गगाः मोक्षगन्तार इव वृन्दावनात् यमुनातटं ययुः। "व्रजगोपालाः अमुना अध्वना यमुनां व्रजाम। पथि कृष्णस्य पदानि लक्षणैः सह लक्ष्यन्ते" इत्थं विमर्शिनः प्राप्तान् स्वान् दृष्ट्वा सः कृष्णः सर्पमूर्ध्नि ननर्त किल। सुहृदागमने कः न नार्नति ?

लोकवन्द्यः कृष्णः सरत्नेषु कालियफणाउत्कणेषु गरुत्मतःकरयोः मुख्यदैवं स्वपदं तद्दमने औषधं विधित्सन इव ननर्त किल। कालियफणीन्द्रस्य विराजिपुच्छं एकेन करेण उन्नीय श्रमेण खिन्नं अस्य विष-दूषितं वक्त्रं ममर्द। कथम् ? अन्तराश्रितं अशेषं असह्यं विषं विनतेन आननेन निष्कासयन्निव। स कृष्णः कालियस्य मुखं विभिन्दन्नपि तदीयं पुच्छं करेण जगृहे। ननु यथापराधं दण्डदाता शौरिः निरागसं कं न वरयेत्[1] ? आर्तबन्धुः श्रीहरिः अहिराजमौलिं विदारयन्नपि तं करेण पस्पर्श। निजेषु शिक्षाऽपि तस्य विष्णोः परं परानुग्रहहेतुरेव। भृत्याः भवाब्जासनमुख्यदेवाः नृत्यन्तं निजनाथं एनं कृष्णमेत्य आर्तसर्पाश्रिताज्ञानं अपहर्तुमिव गृणन्तः विष्वक् तस्थुः किल। अनीनदत् पद्मभवो मृदङ्गम्। जगौ हनूमाञ्जगतामधीशम्। अदर्शयत्तालगतीः कपर्दी। ननर्त गोपालकबालमौलिः।

ततः अहिपत्नीप्रियमञ्जुवाक्यं निशम्य कृष्णः तं कालियं आशु निर्भयं चक्रे। तथाहि। नारीमृदुभाषणेन कस्य चित्तं मृदुतां न उपैति। सः कृष्णः कालिय-कालिन्द्योः विषाश्रयत्वेन, नीलगुणत्वेन, कृष्णः कृष्णा इति नाम्ना साम्ये अपि तं भुजङ्गमं निपीड्य भास्वत्तनयां जुगोप। न कस्य योषित्सु हि पक्षपातः ? सः कृष्णः आगस्कृतं नागपतिं पादेन तत्कृताङ्कैः तस्य तार्क्ष्याद्भयं जहार। भवति कोपोऽपि देवस्य वरेण तुल्यः। असौ कृष्णः सर्पस्य विमर्दनात् स्व-पक्षपातिनः गरुडस्य नूनं प्रियं प्रसाधितवान्। तथा अन्ते कालियस्य गरुडात् अञ्जसा अभयं विधाय स्वतल्पाय शेषाय च अनल्पां मुदं ददौ।

अहो निदाघोत्थभयादिव ईशः गङ्गा बिभर्ति । सः रमापतिः जलधौ शेते । चतुर्मुखः पङ्कजविष्टरो वर्तते । त निदाघ अन्यः कः विषहेत । तदापि सिद्धाः प्रहृष्टरोमावलयः सन्त. निमीलिताक्षाः चतुरग्निमध्ये स्थित्वा परमं पुमांसं स्मरन्ति । तथाहि । फलार्थिनां किं न विषह्यमस्ति ? वायुः इनः सुशीतलः कृष्णपदाब्जयुग्म स्पृशति । ततः उज्ज्वलं काननाग्निं समुत्थापयति स्म । अयं स्वभाव. खलु चञ्चलानाम् । अस्मिन् ग्रीष्मर्तौ गिरिकुञ्जवासा. नागरिका. प्रियास्तनाख्यान् कुम्भान् परिरभ्य तदीयाधरजां सुधां पिबन्तः अहो ताप न विदन्ति न वा पिपासाम् ।[1] कृष्णः दृष्टिपथ गतेन मुखेन्दुना सुधार्द्रवीक्षामयवृष्टिभिश्च व्रजौकसां काननवासिनां च तपनोत्थं तापं जहार ।

सः शौरिः सप्तवृषान् जित्वा कुम्भकसम्भवां स्वीयां नीलां अलभत । स चापि कुम्भकः कुम्भकादिप्राणायामबलात् सप्तधातून् निगृह्य नीलमणिभिर्नीलां तत्कृष्णपुरी करेऽलभत । वृषभाणां शृङ्गप्रहारैः द्रवत्कुम्भाभाङ्गयुक्ताः अपरे बहवः अपि नीलां मुखस्य प्रभा अलभन्त ।[2]

अथापरो रासभवेषधारी धेनुकाख्यः दैत्यः मुकुन्दयोग्यं वन समाक्रम्य जन्तून् जघान । बत, तादृशाऽसौ प्रकृत्या खरः इति मम प्रतर्कः क्षुधया अतिलोलाः गोपबालाः अच्युतेन सह तरखराक्रान्तवन अभिमयुः किल । तथाहि । दुष्टस्य विनाशनः अन्यत् सतां मनस्तृप्तिकर किमस्ति ? अथ असुरवर्गवर्यः युद्धार्थं कृष्णं आससाद । बलाढ्यः बलभद्रः निजध्वजक्ष्माजस्य समाजेन विराजमानं तद्वनं धेनुकाक्रान्त ईर्ष्यमाणः इव तं धेनुकं

1) शीतकाले भवेदुष्णं उष्णकाले तु शीतलम् ।
कूपोदकं वटच्छाया ताम्बूलं तरुणीस्तनम् ।

2) कुम्भको नाम गोपालः स्वकीयैः सप्तवृषभैः संयोध्य जयशालिने वराय स्वकन्यां नीलां दास्यामीति प्रकटीचकार । अत. कृष्णस्तान् सप्तवृषान् जित्वा कुम्भकस्य पुत्रीं नीलां लब्धवान् । तत्पिता कुम्भक. नीलमणिभिर्नीलां तत्पुरीं अलभत । नीलाशया आगता राजान नीलां मुखस्य प्रभामलभन्त ।

प्रत्यगमत् । असह्यमत्वः अस्तमायः खलः सः धेनुकः निजपार्ष्णिपद्भ्यां तं बलभद्रं प्रताडयन् तौ पादौ गाढं प्रगृह्य उत्क्षिप्तः बलभद्रस्य सहायोऽभवत् । सः बलरामः सतां विपक्षं तं धेनुकासुरं उत्क्षिप्य तालमहीरुहाग्रे संप्रेषयामास– विष्वक्फलालम्बनि पादपाग्रे उपलं धृत्वा आत्तलीलः बालः इव । अथ गुरुतमतनुः व्यसुः दैत्यः धेनुकः वृक्षात् निपतन् कांश्चित् स्वकीयवृक्षानेव उच्चैः पातयामास । ते पतिताः वृक्षाः हरिपदविमुखानां पोषणस्य उचितं फलं तैः हरिपदविमुखैःसह अलं अलभिषत इत्यस्मद्बूहः । सुरैः नतः श्रीकृष्णः गर्गमुनिना कृतं अग्रजस्य बलभद्रः इति नामधेयं गुणोचितं विरचयन्निव अनुगैः सहितं धेनुकं रणतोषितनाकिना तेन हलधरेण हतं समकारयत् । ग्रीष्मे भास्वति च अपराधकृति सति संक्रुद्धः हली लीलायाः छलतः प्रलम्बासुरं जघान । तत् युक्तं हि । जनयिता मनःप्रियान् स्वान् शिशून् सन्तर्जयन् तप्तोऽपि तत्प्रान्तस्थशिलादि हस्तलगुडैः ताडयेत् ।[1] ततः निदाघः स्वपराभवं वीक्ष्य उज्ज्वलं तं दावानलं ससर्ज । जगन्निवासः हरिः तं च पपौ । विनाशशून्यस्य हि किं न कार्यम् ?

## वर्षर्तुवर्णनम् :

मेघाः सवर्णस्य हरेः सहाय प्रायः विधातुं परितः समेत्य स्वशरीरैः भास्वन्तं आच्छाद्य पयसा निदाघमाछाद्य कृष्णसम्बन्धि विश्वं पुपुषुः । विष्णुपदं आश्रित्य अर्थिषु अम्बु यच्छतः मेघस्य जल(ड)नायकोऽपि सारथिरभूत् । नित्यं मुकुन्दचरणार्पितवैभवस्य मर्त्योपकारनिरतस्य न कः सहायः । लोकस्य शोकहरवारि अलं अभिवर्षतः मेघस्य अमतः वातोऽपि योगकृदभूत् । कामं परोपकृतिलग्नमनोरथानां शत्रवोऽपि क्षेमङ्करत्वमुपयान्ति हि । पयोधरेभ्यः वृष्टिरासीत् । ते उद्यद्विद्युता, वक्रेण शक्रधनुषा च प्रकाशिता आसन् । व्योमाग्रसीमाश्रयास्ते ऊर्जितगर्जितेन

---

1) ग्रीष्मसूर्ययोः अपराधे सति असुरयोः अनयोः शिक्षा स्वशिशुसन्तर्जकपितृवत् युक्तम् । अनेन ग्रीष्मसूर्ययोः स्वीयत्वं द्योत्यते ।

मर्त्यानतिचकितांश्चक्रुः । तैश्चकितास्ते युवानः तन्निवारणार्थं नेत्रान्त-भ्रुकटीबलं कुशलसन्मध्योर्ध्वभागोदित क्वणद्भूषणं नारीपीनपयोधर भेजुः ।[1] पयोधौ कादम्बिन्यै पयोबिन्दुमात्रं वितरति सति सकलसरितां स्वात्मनश्च वृद्धिरासीत् । तदुक्तम् । नित्यं विष्णोः पदमधिगताय अत्युदाराय अब्बिन्दूनामपि दानात् शतगुणा वृद्धिरद्धा स्ववर्गे । मेघागमः असह्यमपि ग्रीष्मस्य सकलं सत्वं प्रजह्रे । तत् तथा । सर्वंसहाजीवन हर्तुरस्य ग्रीष्मस्य दुर्वारतेजोऽपि किमेति वृद्धिम् ?

**शरद्वर्णनम्,**

उज्जृम्भितं शरत्साम्राज्यं सच्छास्त्रप्रतिकृति अलक्ष्यत । सच्छास्त्रेण साधूनां मनः निर्मलं भवति । मुखं च सिकासमैति । पापं खण्ड्यते । हृदयाकाशगतं अज्ञानं नश्यति । भगवज्ज्ञान च सञ्जायते । संसार-बन्धविच्छेदात् स्वरूपानन्दः आविर्भवति । तथा शरत्काले सरांसि निर्मलानि भवन्ति । पद्मानि च विकसन्ति । मार्गेषु पङ्कं सखण्ड्यते । आकाशगतं च घनाभिधानं नश्यति । सूर्योडुपौ स्पष्टौ भवतः । तामिस्रं नश्यति । भिक्षूणां वणिजां च प्रावृट्कृतं बन्धनं विच्छिद्यते । बहुगोक्षीर पानेन जनाः मोदन्ते । इत्थं शरत्कालः अवर्धत । शरत्काले मरुत् सच्छास्त्रे[2] आनन्दतीर्थवत् मूर्धाभिषिक्तः अभूत् । श्रीमदानन्दतीर्थः पद्मया आसेव्यस्य नारायणस्य ज्ञानानन्दादिगुणौघानां विस्तृतिकरः । विचित्रशब्दप्रयोगेण शारदायाः आनन्दं अस्पष्टयत् । कम्पितेन भोगि राजस्य शिरसा तस्य आगमः (शास्त्रं) सन्ततं मान्यः । सन्मार्गाश्रि-तानां अन्तःकरणविषयं पङ्कं मिथ्याज्ञानं शोषयति । मोक्षमार्गचराणां तापापहः, नित्यं विष्णुपदाश्रयः परिलसत्पुण्येन पूतश्च । रामस्य अयो-गिनां (अभक्तानां) भीमचरितः मध्वाचार्यः । स्वकीयागमैः सद्वंशप्रसूतं

1) राजभयस्य तत्सदृशराजान्तराश्रयणेन परिहारवत् । पयोधरजन्यभयं तत्सदृशपयोधरान्तरं समाश्रित्य परिहृतवन्तः मर्त्याः ।

2) समीचीनब्रह्ममीमांसाशास्त्रे ।

मुहुः प्रेमालम्बनशब्दैः हृद्यवदनं कृतवान् । सुमनश्चयस्य सुक्षेमं विहितवान् । भूमौ सम्यग्वितत्मूर्तिरभूत् । तथा शरदि वायुः पद्मानां आसेव्यनां परिमलादिगुणौघानां विस्तृतिकरः । तेन च शारदा (शरदि विद्यमान) नन्दः स्पष्टीकृतः, भोगिभिः राजभिः शरत्कालीनवायोः आगमः सन्तत कम्पितशिरसा मान्यते । मार्गस्थितस्य पङ्कस्य शोषणकरः वायुः सत्पथिकानां घर्मजन्यखेदापहः । नित्यं आकाशाश्रयः असकृत् परिलसत्पुण्याम्बुभिः पूतः, रामा (कान्ता) वियोगिजनस्य भयङ्करसञ्चारः अय मरुत् । स्वागमनैः मुहुः सद्वशसमूहं स्नेहास्पदध्वनिना हृद्यवदनं करोति । पुष्पसमूहस्य सुक्षेमं विदधाति । प्रपञ्चे सुव्याप्तः असौ वायुः शरत्काले प्राधान्यं भजते ।

## हेमन्तवर्णनम् :

वियुक्तनारीमुखपद्मपुञ्जैः सह अम्बुजातं शिथिलं वितन्वन् प्रबोधकल्पं रविं अल्पकान्तिं विधाय हेमन्तः उपाजगाम । उष्णरश्मिः सूर्योऽपि सकृत् हिमादिताङ्गः वह्निं स्वकरैर्दधानः अजस्रं जलधिं विशति स्म । ततः तां हिमानीं अबलाः कथं सहन्ते ?

कृष्णं पतिं आप्तुकामाः धन्याः गोपकन्याः अयं हेमन्तः पतिं वशीकर्तुं कालः इतीव तस्य असमधाम च वितर्क्य तं प्राप्तुं दुर्गापूजारूपं व्रतं वितेनुः । ताः गोपकन्याः पुमांसं अभ्यर्थयितुं स्वसमानान्तरङ्गाः वरवर्णिनीश्च अभ्यर्थयितुं सलज्जाः सत्यः श्रीरमणस्य सहोदरीं कृतविश्वसर्गां दुर्गां अपूजयन् । कृष्णं पतिं कामयन्त्यः ताः गोप्यः व्रतेन लक्ष्मीं प्रसन्नां विदधुः । अपरथा प्रभुः कृष्णः स्वप्रेयस्याः वैरिवधूः ताः तुष्टाः कथं विदध्यात् । अतिकुशलाः गोपकन्याः 'प्रणयापराधशमने कर्तव्ये कृष्णः अस्माकं नम्रोऽस्तु' इति दुर्गां नेमुः, स कृष्णः अस्मत्कबरीं कुसुमैरलं सन्दधातु इति प्रेम्णा पुष्पाणि अवेदयन् । सः अस्माभिः साकं मज्जनमाचरयन् अस्मत्कबरीं धूपधूमेन शोषयतु इति धूपमवेदयन् । कृष्णः अस्मान् आलिङ्ग्य स्वतिलकेन स्वगन्धेन च अस्माकं तिलकं अनुलेपं च

कुर्यादिति तस्यै दुर्गायै तिलकं गन्ध च ददुः। ताः मुकुन्दचर्वितलसत्ताम्बूल-सिद्ध्यै ताम्बूलं तस्यै ददुः। तद्बिम्बोष्ठसुधाप्तये च तस्यै पयो ददुः। सः कृष्णः ग्त्यन्ते गलिताभरणसमूहं अस्मत्तनुषु निधाय समलङ्करोतु इति दुर्गाया मृदुतनौ भूषावली संदधुः। इति ईप्सितसिद्धये ताः दुर्गां अपूजयन्।

तत दुर्गापूजानन्तरं सपत्न्याः लक्ष्म्याः अर्चने तत्पराणां व्रज-बालिकानां पतिकामनया सपत्न्यर्चनस्य विरुद्धत्वात् दुर्गापूजानियम भग्नमाधातुमित्र धीरः कृष्णः अम्बुविहारकाले तासामम्बराणि जहार।

गोपकन्याः – देहि इश ! अम्बर अस्मदीयम्[1]

कृष्णः– अबला दत्तम्।

गोपिकाः– क्व तद् वर्तते ?

कृष्णः - मध्ये वः प्रतिभाति।

गोपिकाः– तर्हि न कथं संदृश्यतेऽस्मद्दृशा।

कृष्णः–मुग्धाः तार्किकमौलियुक्त्यकलितं तत् वः चञ्चल[2] लोचनैः द्रष्टुं नैव शक्यते इति वदन् स कृष्णः मां पुष्णातु।

ततः स मानी कृष्णः जञ्चललोचनान्ताः ताः क्रमेण अङ्कुरिताङ्गजाताः[3] निरीक्ष्य स्वसङ्गयोग्याः[4] तर्कयन्निव मुदा तद्वसनानि ददौ।

---

1) चीरहरणे गोपकन्याकृता प्रार्थनेयम्। अम्बरशब्दस्य वस्त्रार्थं अभिप्रेत्य तासां वचनम्। कृष्णस्य आकाशार्थं अभिप्रेत्य। कृष्णस्य सर्वस्त्रष्टृत्वात्, गोपिकानां मध्यस्यापि तत्सृष्टत्वात् दत्तमित्युक्तम्। तासां मध्यस्य अतिसूक्ष्मत्वेन अदृश्यत्वात् अम्बरत्व (आकाश) व्यवहार.।

2) तार्किकश्रेष्ठानां गौतमादीनां युक्ताभिः अगम्यं तत्व्योम। अनुमानागोचरस्यातीन्द्रियस्य साक्षिसिद्धस्य गगनस्य चक्षुषा द्रष्टुमशक्यत्वादेवमुक्तिः।

3) सञ्जाताभिलाषाः, अनेनासां कामजननीत्वं द्योत्यते

4) कामभातुः कृष्णपत्नीत्वात्।

ततः कदाचन वृन्दावने सञ्चरणात् अतिश्रान्ता गोपा अन्नार्थिनः सन्त द्विजैःपूर्णां यज्ञसभा ययुः। क्षुत्पीडिताऽपि परमानुगमण्डली सा 'कृष्णाय भोज्य' इति विप्रचय ययाचे। तद्युक्तमेव। मुररिपोः अनुचराः स्वार्थे विरागाः यत्न कदाचिदपि न स्वकृते प्रकुर्युः। ते विप्राः गोपैरभ्यर्थिता स्वीयक्रियाभङ्गभयेन श्रेयस्कृते कृष्णाय अन्न न ददुः किल। अस्मदीये मखे स भृत्यैः सह अश्नाति इत्थ विदित्वा ते न ददुरिति मम प्रतर्कः। स्वपतिभिः कृष्णाय अन्न अदत्त दृष्ट्वा विप्राङ्गनाः तस्मै सर्पिर्दधिपायसादि समर्प्य मुवित करस्था किल ता वितेनुः। पुरुषमौलिभाजां पुस्त्वेन कि प्रयोजनम् ?

स गतभीः विभुः कृष्ण गिरीन्द्ररूपधारी सन् अप्रतीतः विप्रपत्न्यर्पितभक्तभुक्त्या समासक्तमना इव[1] स्वकीयैः गोपैः इन्द्राय दीयमानं भोज्य अभुङ्क्त।[2] शतमन्योः मन्युविवर्धनः कृष्णः तदीययज्ञं त्याजयित्वा अस्मदिष्टार्थप्रद गोवर्धनपर्वत प्रति यजत, इति गोपान् प्रोत्साहितवान्। तथा तैः कृते तै सह गोवर्धनगिरि प्रदक्षिणीकृत्य, पर्वतरुपधारी तदर्पित बलि स्वयमुररीचकार[3]। सहस्रनेत्रोऽपि स इन्द्रः कृष्णसत्वं मनागपि अविज्ञाय मेघान् प्रवर्षणार्थं दिदेश। निगमैकवेद्ये कृष्णे अक्षिबाहुल्यं किं कृत्यमुपैति ? शतक्रतौ वर्षति वासुदेवः गिरिं समुद्धृत्य तूष्णीं बभूव। स्वासमशत्रुशौर्यं जिहीर्षुभिः तस्य आद्यवैरिणः[4] उद्धरणं कार्यं हि। स कृष्णः ईश्वरे मयि कूर्मादिरूपेण भूभृति जागरूके सति बुद्धिशून्यः गोवर्धनगिरिः च स्वयं भूभृत् किल इति अमर्षादिव तं भूधरेन्द्रं गोवर्धनं करेण भूमेः सकाशात् उदबीभिदत्।

1) वैकुण्ठे प्राकृतान्नभोजनस्य कदाप्यलाभेन अपूर्वरसविशेषसल्लग्नचित्त इव

2) इन्द्राय याग त्याजयित्वा तदर्थं कल्पितं बलिं स्वयं जग्रास।

3) एतेन कृष्ण सशलुं बलिं अङ्गीचकार, स्वपूजां त्याजयित्वा पर्वतं पूजयामास च इति शतमन्योः मन्युरवर्धत।

4) पर्वत इन्द्रस्य आद्यवैरी।

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते
सञ्जातः सुरमण्डलीषु महितः सर्गो मुदां पञ्चमः ॥

---

## षष्ठः सर्गः

महेन्द्रेण प्रेरितैः मेघालिभिः मुक्तानां पयसां प्रवाहेण आवृतभिन्नभागं मुकुन्दहस्तेन उन्मूल्य उद्धृतमपि त अद्रिराजं गोवर्धनं मनुजाः अनुद्धृत[1] व्यजानन् । गोवर्धनमहीध्रः तदा वर्षणकाले, वर्षासु वर्षसहतामधिगम्य, वार्षु तपस्तप्तुं कृतस्थानस्य, अन्यजन्मनि शर्म सिसाधयिषोः हृन्मध्यलब्धपरमस्य ऋषेः सादृश्यं प्रपेदे ।[2] उद्धृते तस्मिन् गोवर्धनगिरीन्द्रे अन्तः गोपाः करुणाधारासहितविलोचनकान्तियुक्तश्रीकान्ताख्यं मेघं पश्यन्ति स्म । बहिश्च मेघदर्शिभिः वृष्टिभयाभावात्सन्तोषहेतुषु गुहासु गतैः प्राणिभिः सः गिरिः आवृतः आसीत्—इत्थं अन्तः गोपाः बहिश्च प्राणिनः ससन्तोषमवर्तन्त । कलशोपमानैः सुवर्णशृङ्गैः, कृत्रिमसन्निभैश्च मृगादिभिः समन्तात् गुहानां उल्लसद्द्वारगणैश्च वृतः गिरिर्गोवर्धनः विष्णोः गोपुरति इव । समुत्तुङ्गं नगं दधानः स कृष्णः भविष्यति मल्लेन्द्रस्य चाणूरस्य जये उपयोगि तदीयविद्या (मल्लविद्या) भ्यसनं विधातुं अभ्रलग्नं शिलोच्चयं बिभ्रदिव बभौ । कृष्णधृतः सुराणां विस्मयकारी विस्तृतस्य पुष्करस्य मध्यंगतः अत एव आर्द्रः सः गोवर्धन-

1) वृष्टिबाहुल्यात् अविच्छिन्नप्रवाहैः खण्डद्वयान्तरस्याच्छादनात् अनुद्धृतं व्यजानन् ।

2) जलमध्यस्थितत्वात्, स्वान्तर्गतकृष्णत्वाच्च ऋषिसादृश्यं पर्वतस्य ।

गिरिः सिन्धोः कबन्धात् उद्धृतस्य भास्वन्मन्दरस्य कान्ति अचूचुरत् । अम्भसां चक्र लसता नेन भूभृता वृष्टिजन्यभयाब्धि म्वपरितः स्थिता-गाधसमुद्रोपमजलं वा नितीर्षोः व्रजवर्गस्य शमितोपप्लवः प्लवः अनुचक्रे । स गोवर्धनः खगान् द्रुमकोटरेष मृगान् स्वगुहागृहेषु, तप्तु समागतान् मुनीन् घनेभ्य. अत्युच्छ्रितासु मेखलासु निधाय वृष्टेः सकाशात् जुगोप । अग्रचः को वा विपत्सु स्वीयमुपेक्षते ? घनवर्षपातेन निपातितैः प्रसून कोशैः अङ्कितसर्वगात्र अद्रि मुकुन्दहस्ताम्बुजसङ्गसौख्येन प्रहृष्ट-रोमालिरिवास्ते । स भूधरः साशनिना वर्षपातेन समाहतोऽपि अणु अपि नो चकम्पे । तथाहि । गोब्राह्मणरक्षकस्य, कृष्णदोर्दण्डभृतस्य क्व कम्पः ? पयःश्रितेन स्वप्रतिबिम्बेन लोल, वृष्टिपातवशात् पतद्भि प्रसूनैः अञ्चितशृङ्गजालं, स्वकुक्षिमध्यार्पितनन्दबाल त पर्वत जनः अद्भुतं सम्पुटमाशशङ्के । स्वकीये स्फटिकनिर्मिततुङ्गशृङ्गं त्रिविष्ट पस्य अभ्रस्य च प्रतिरूपधारी सः पर्वतः हरेः निदेशात् अपराधिनोः शक्रघनयोः आलयौ तौ (त्रिविष्टप-अभ्रौ) लोकौ ग्रसतीव । सः श्रीपतिः यदा पर्यटतां कुञ्जराणां पुञ्जैः शोभितं धरं उद्दधार तदा कवयः 'शिशोः करे हस्तिसहस्रमस्ति' इति समस्यां परिपूरयन्ति । सः अद्रिराजः गोवर्धनः भासुरे श्रीशस्य कपोले लग्नस्य नखोल्लसत्नकरस्य अग्रे संस्थितः सन् कूर्माश्रितस्य नागराजस्य फणास्थपृथ्वीश्रियं बिभर्ति।[1] उद्गच्छद्धूम्मा वलिरूपधूमवन्तं, द्रवद्धातुरसैः आर्द्रशृङ्गं, विष्वक्पतद्रत्नचयस्फुलिङ्गं तं अद्रिं ईशेन कृष्णेन आचरित अग्न्यस्त्र प्रतर्कं । गोवर्धनाद्रिः तं घनं स्वस्य इन्द्रनीलधरणीकान्त्या, तस्य आखण्डलचापं शिखण्डश्रिया, अम्बुनिचयं मुक्ताफलानां रुचा, तस्य तटितं च स्वीयसौवर्णस्थलशोभया, तन्नादं च पञ्चास्यनादेन साधु जिगाय । । किन सुकरं नित्यं क्षमा-धारिणः । 'हे गोपाः वार्मुचामाटोपः अद्यापि अस्ति किम् ? निर्गत्य पश्यत' इति कृष्णोनोक्तः कोऽपि गोपः तद्विदित्वा माधवं वक्ति–

---

1) एवं च कृष्णकपोल. कूर्म इव, करः शेषइव, हस्तः भोगइव, नखा रत्नानीव अभूवन् ।

"प्रभो यदुपते पयोमुचां धारा नैवास्ति । परन्तु स्वानां प्रेमाश्रुधारा वर्तते। नापि च गर्जितमस्ति मेघानां, स्तुतिकृतां सिद्धेश्वराणां ध्वनिरस्ति । विद्युन्नास्ति । अमरनर्तकीकरचयालङ्काराणां कान्तिरस्ति । वायुर्नास्ति । सुरवृष्टपुष्पसहगानां अनलालीनां पक्षैर्मरुत् वर्धते । यदुपते ! नभः नील नैव । सुलज्जितशचीभर्तुः[1] मुखनीलिमा । आकाशे मेघाः क्वापि नः सन्ति, किन्तु त्वद्दर्शनार्थमागतानां दिविजानां विमानान्येव तत्र अम्बुदाः । अपि च दिशि तामिस्रं नास्ति । त्वां मानुषं मन्वतां मूर्खाणां चित्तेषु तमोऽस्ति[2] । किञ्च निजजने वेपथुर्नास्ति । किन्तु कृष्णः कोपात् किंकरिष्यतीति भीतस्य इन्द्रस्य गात्रे केवलं वेपथुर्वर्तते ।

ततो वृष्टिशान्त्यनन्तरं सर्वैः गोपैः गोपीभिः गोधनैरपि परीतः सुरैर्नरैश्च स्तूयमानः कृष्णः प्रयतं गोष्ठं प्रतस्थे । गोवर्धनपर्वतं पूर्ववत् संस्थाप्य कृष्णे व्रजं गते, नाथस्य तस्य अपराधकृत् सुलज्जितः शक्रः त्रिलोक्यां रम्यतमं सदयं अच्युतं रहसि उपेत्य मूर्ध्ना प्रणम्य स्वकृताघ-शान्त्यै गोविन्दनाम पठन् च सुधया अभ्यषिञ्चत् ।

एकदा एकादश्यां उपोष्य द्वादश्यां पारणं सकालं कर्तुकामः नन्दः अकाले एव यमुनां स्नातुमगच्छत् । तं सलिलेशस्य अनुगः बद्ध्वा वरुणालयं निनाय किल । स तु वरुणः "स्वनाथस्य कृष्णस्य पितरं तं नन्दं श्रुत्वा समन्युर्भूत्वा भृत्यच्छलेन बबन्ध" इति मे प्रतर्कः । कृष्णोऽपि वरुणस्य दुष्कर्मितं वीक्ष्य प्रतुष्ट इव नन्दानयनरूपकृत्यच्छलेन निजदर्शनं दित्सन् एव अम्बुराशिनिलयं गत्वा वरुणेन अभ्यर्चितःसन् जनकेन साकं स्वभवनं पुनराजगाम ।

## सूर्यास्तवर्णनम् :

वातायने गगनाख्ये भाजने कृशानुसङ्गि तप्तं उत्तुङ्गस्फुलिङ्गैः आवृतं, माहेन्द्र्याः दिशः शुभकुण्डलं रचयितुं अमरैः उपायात् सङ्गृह्य

1) पराभवेन सम्यग्लज्जितस्य इन्द्रस्य । शचीभर्तुरित्यनेन स्त्रीसमक्षं जातः पराभवः अतिलज्जाकरः इति ध्वन्यते ।

2) अज्ञानम् ।

अम्बुनि सन्निवेशितं हेम इव सायङ्काले तेजोराशिः रागाञ्चितः इनः पश्चिमं जलधिं जगाम[1] । असौ विवस्वान् करैः गिरीन्द्रान् परितो दधानोऽपि अब्धौ पतितः किल । "सरितां शरीरविशोषकं तं विवस्वन्तं तासां पतिः समुद्रः अग्रसीत्" इत्थं मम आभाति । सहजातं अपि स्वरागं क्रमेण त्यक्त्वा चक्राब्जमानितकरः प्रततोर्ध्वपादः विष्णुपदं आश्रित्य यः उग्रतपः अतपत् स रविः तस्य विष्णोः धाम समुद्रमेव जगाम । अतः सूर्यस्य पातः कुतः ? अय भानुः भुवि तपस्विनिवहं तप्तं ततान । पृथ्व्याश्च जीवनं स्वकरैर्जहार । अहो । तथा उडुनिकरस्य लक्ष्मी वृथैव जहार । तस्यास्य पातमपि युक्तिसह वदामः । सः द्युमणि वज्रपाणेः दिशि लब्धजन्मा गगनस्य मध्ये प्रवृद्धगात्रः विनाशं प्रतीच्यामगात् । अहो विधेर्निदेशो महताप्यलङ्घ्यः । रागी सविता हरिदङ्गनानां पयोधरतटे रागं समर्प्य अगान्तं (पर्वतान्तं) अगात् । कूजद्विहङ्गमरवैश्च रुदन्त्य इव ताः हरिदङ्गना उरुमूर्च्छामिव तमस्ततिं च भेजुः । अम्भोधिहृदि कृतपदं साधु धवलीकृतसमुद्रजलौघं स्वप्रतिरूपं संदृश्य सः अर्कः "शान्तो हि सर्वहृदयङ्गमतामुपैति" इति निश्चित्य अन्ते शमं समधिगम्य अब्धिं विवेश । अम्बुजातनिकुरम्बस्य नितान्तमित्रे मित्रे अस्तं समीयुषि सति शुद्धजलगस्यापि पद्मस्य मुखं मुकुलीबभूव । नष्टाः प्रियाः समृद्धियुजोऽपि स्वीयस्य वक्त्रं मुद्रयन्ति खलु ।

आकण्ठोदकवासि, हृद्गस्य मधुकृतः झङ्काररम्योक्ति, भ्राजत्कण्टक[2] कण्टक[3] द्युति, मुहुः मन्त्रार्थानां सञ्चिन्तया ईषत्कम्पित मूर्धशोभि, हंसौघसंशिक्षितं स्वन्तःस्थापितधातु नलिनं मित्रोदयमाकांक्ष्य साधु तपतीव भाति सायङ्काले ।

---

1) यथा आभरणकर्तारः धमन्यादिवातसञ्चारयोग्यमूषायां सुवर्णं निधाय अनलसयोगेन तप्तं कृत्वाऽयोमयदण्डेन उद्धृत्य जले प्रक्षिपन्ति तद्वत ज्योतिश्चक्रचालकाः माहेन्द्रदिगङ्गनायाः कुण्डलं विधातुमिव (प्रातः सूर्यस्य कुण्डलाकारेण प्राच्यामुदेष्यमाणत्वात्) सूर्यं समुद्रे क्षिप्तवन्तः

2) कमलनालकण्टकाः. 3) रोमाञ्चाः

**चन्द्रोदयवर्णनम् :**

दिशांपतौ सूर्ये अपरां दिगायतनाक्षी उपेत्य रागमपेयुषि, इन्द्रः इन्द्रस्य दिशि रोषरक्त निबद्धनीलभ्रुकुटि तस्याः[1] वक्त्रमिव अदृश्यत। शशी पूर्वं नक्षत्राख्यालिभिः इन्द्रदिङ्मृगाक्षी सन्धाय पुनः तत्पादे प्रणतिं विधाय, स्वस्य आशान्तरेषु आसक्तितः जनितं तस्याः कोपसमं तमः नितरां परिहरन्, स्वीयैः करैः ता स्पृशन् तस्या. वक्त्राम्भोरुहचुम्बनाय नूनं शनकैः उद्याति। चन्द्रस्य कोमलकरैः रचिताङ्गसङ्गा ता. दिश सान्द्रं अन्धकार[2] अपि सहसा विहाय अखिलजन्तुषु स्वपत्सु एन (परपुरुषं) चन्द्र ईशं वव्रः। नूतनविषयाः आशा[3] हि एनः न गणयन्ति। सरसोऽसाविन्दुः पूर्वाब्धौ अवगाह्य फेननिचयाख्यश्रीखण्डलेपद्युतिः स्वाङ्काख्येन अलंकृतिमूलेन नीलतिलकेन शोभित. सन् ताराख्य हारान् तस्यै पूर्वदिगङ्गनायै दिशन् व्योमाख्यां तत्कबरी प्रगृह्य सुकरैः दिक्कामिनीं तां आश्लिष्य रागेण तां रञ्जयन् चुचुम्ब। उदितचन्द्रं नभः कृष्णस्य वक्षःस्थलमन्वेति। तत्र ऊर्ध्वरश्मिविशिष्ट नक्षत्राणि हारवद्विराजन्ते शशाङ्कसङ्गिचन्द्रः नीलमणिरिव शोभते। वार्वाहावृतसर्वभागं शशाङ्कं ईषद् दर्शितकोणं नभसोऽग्रेस्थितं उदित विधोर्बिम्बं अच्युतमनस्तोषं रम्यवसनच्छन्नं, कुङ्कुमशोभि मरुद्दर्शितप्रान्तं, मध्यस्य उपरिष्टात् उदयत् श्रीकुचकोशमिव रेजे। दिशां भर्तरि दिवाकरे अन्यदेशं गते सति असौ चन्द्रः शनैः ताः उपेत्य तासां अम्बरं स्वकरैः यत् जगृहे तस्मात् सः कलङ्की इति मम प्रतर्कः। पौर्णिमास्यां यत् पूर्णं वस्तु रात्रौ उदयति तत् कृष्णस्य कीर्तिनार्याः वक्त्रमेव। तच्च कस्तूरी तिलकोपेतम्। प्रविरलकचविन्यस्तानि पुष्पाणि नक्षत्राणि। तदपि देवैः स्तोत्र व्याजेन वदनविनिहितम्।[4] तत् नन्दसूनोः कुमार्याः कीर्तिनार्याः वक्त्रं नो चेत् गोपाङ्गनानां हर्षाय, अहितवधूवर्गस्य तापाय च कथं स्यात्?

---

1) पूर्वदिगङ्गनायाः  2) भर्तृविरहजदुःखमिति ध्वनि.

3) दिशः, अभिलाषाः

4) अनेन चन्द्रकलानां प्रतिदिनं क्रियमाणस्य पानस्य गतिरुक्ता।

हृतनस्करप्रचारे दिवसकरे नरनयनस्य विदूरवर्त्म याते सति अथ पूर्णबिम्बः रजनिकर नभोमाङ्गमुपेत्य मानवानां श्रममधरीकुरुते[1] ।

स्मरेण, श्रीकृष्ण आत्मसात्कर्तुमिव ऊर्ध्वं प्रयुक्त. मारमौर्व्यां स्थितमल्लिकाख्यबाण इव स चन्द्र व्रजस्त्रीहृदय विजित्य शनैः हरे· पद प्राप । गन्धर्वांगा गोतेन आवृतं अपारतारैः भूषितं अभ्रं चन्द्रेण रञ्जितमुदोक्ष्य मुदा मुकुन्द मधुपमञ्जुरवं प्रसूनसन्दोहैः सान्द्रं, तरुजालैर्नीलं वृन्दावन प्रविशत् तं कन्दर्पतात कृष्णं अवलोक्य इन्दु स्वरम्यकिरणैः विपिन पुपूर । मन्दानिलश्च मुदितानां उत्पलानां मान्यगन्धैः पुपूर । तरवः सान्द्रप्रसूननिचयैः समन्तात् वृन्दावनं तत् पुपूरुः । पिकाश्च गीतैः पुपूरुः । "प्रभो कृष्ण त्वं इह वृन्दावने चन्द्रिकायां ललनासहितः विहृत्य 'विश्वस्य मोहनःचन्द्रः' इति मदीयं यशो विस्तारय" इति कृष्ण पार्थयन्निव हिमांशु वृक्षतलप्रविष्टैः स्वीयैः हृद्यकरैः तद्वृन्दावने कृष्णाङ्घ्रि आस्पृशति ।

तदा वृन्दावने कृष्णः विविधैः तै· चन्द्राद्युद्दीपनविभावै व्याकीर्णकाम इव निजसङ्गयोग्या· व्रजवधूः आकर्षयन् क्रमेण वेणुं रणयन् बहुतानमानगानज्ञमौलिः अधीश्वरोऽसौ उत्कृष्टतया अगायत् । अच्युतः स्वहृद्गतं जगत् हृद्येव अनुरञ्जयन्, स्निग्धान् सवयसः संहर्षयन्, गोपस्त्रीहृदयं कर्षयन् पशून् ऋषिगणांश्च निश्चेष्टयन्, स्वगीतश्रवणाय आकाश आगता· सुरवधू संमूर्च्छयन् सङ्गीताभिज्ञान् चारणान् सिद्धान् सन्त्रपयन्, सुरान् विनिमयन् इत्थं विश्वं स्वस्य वशं स्पष्टयन् वेणुं पुपोष । मुरारिः शुष्कामपि मुरली अधरामृतेन सरसां विधाय, मृदूवितशून्यामपि तां हृद्यस्वनां विधाय, छिद्रं च पिधाय चुचुम्बे । सद्वंशजातललनासु न कस्य पक्ष ? "असौ वेणुः अपरवशमपि ईश कृष्णं स्वानुरक्तं विधत्त । गोव्याघ्रादिजन्तुषु सहजात अभेद्यमपि विरोधं हन्ति । जगत्

1) प्रजापालके वृद्धे राशि गतेऽपि अर्वाचीनस्तत्पुत्रोऽपि प्रजाः सुखयतीत्ययमर्थं अनेन ध्वन्यते ।

च एतत् वशयति"– इत्थं वेणुः मान्यतामाप । मधुरनिनदभाजां किं न साध्यं हि लोके ?

स जयति यदुनाथःश्रावितानेकगीतः करधृतवरवेणु कामिनीकामधेनुः सुललितवनमालः सुन्दर पाङ्गलील सजलजलदमूर्ति साधुभिर्गीत कीर्तिः ।।

कृष्णमुखकान्तियुक्ते चन्द्रे जृम्भति तद्वपुर्गन्धे वियोगवन्हिसचिवे मन्दानिले मुहुर्वाति सति कृष्णस्य कोमलालापवत्‌वेणौ कूजति सति शाणाशिते. पञ्चबाणस्य विशिखैः ताडिताः ताः गोप्य मानिन्यः अपि मनोभवनितुः श्रयोनिधि सन्निधिं ययुः ।

कापि गोपी दोह विहाय कृष्णसुरभि समस्तेप्सितं दोग्धुं गता । अपरा स्त्री कृष्णस्य बिम्बोष्ठसुधायां अतिलुब्धहृदया भुक्ति विसृज्य कृष्ण प्रति गता । सद्गुणार्णवभूते भर्त्रे स्पृहां बिभ्रती काचित् कान्त विसृज्य श्रीकान्तं गता । काचन अन्या कृष्णविहारयोग्यविभवा कन्या इति प्रदर्शनाय तोकं विहाय गता । स्वनयनं अञ्जनर्भूषित कुर्वन्ती अन्या गोपी तस्य कृष्णस्य ज्ञानाख्येन अञ्जनेनैव तुष्टधीरिव सत्वरा अगात् । इतरा व्रजाङ्गना कृष्णांघ्रिसेवां सदा तन्वन्त्याः मम तत्पादयोर्भूषण मत्पदयोर्भूषणं भवेत् इतिस्वीयां पदोर्भूषां स्वदोष्णि सन्धाय अच्युतसन्निधिं समगमत् । विभुः कृष्णः स्वस्य आनन्दपूर्णतां स्वकीयाना सन्दर्शयन् आनताः अपि, आत्मानं दृष्ट्वा प्रीताः ताः मानिनीः गोपी. इति अचीकथत्– "पितृभर्तृजनन्यादेः परिचर्या यतः पुरुषार्थप्रदा अतः व्रजमेव व्रजत । भवतीः स्मरतां पित्रादीनां हितं कुरुत ।" इति

गोपाङ्गनाः– हे ईश, अङ्ग, तेषां पितृभर्तृजनन्यादीनां यदि हितमेव कार्यं तदा अस्मान् तत्र गन्तुं नाज्ञापय । विरहाग्निना दग्धैः अस्माकं शरीरैः तां गोष्ठमहीं प्रेतमहीं न विधेहि बत । हे ईश कृष्ण पत्यादीनां सेवा अपि भवत्प्रसादप्राप्त्यर्थमेवेति सन्तः वदन्ति । अतः विधिना त्वत्पादमूलं उपनीताः एताः अस्मान् कस्मात् गन्तुं मुधा आज्ञापयसि ? हे श्रीनाथ, अस्माकं नानायोनिषु सम्भवे सति कियन्त जनाः

मातृता, मान्यतां, पितृतां, भातृतां च अगमन् ? तत्र कस्मिन् जन्मनि विद्यमानानां पित्रादीनां अर्चनं कुर्मः ? अपिच एषु पित्रादिषु कतिवार वैर न कृतम् ? तस्मात् हे विश्वान्तरात्मन् विभो श्रीकृष्ण, नित्यं पितरं पति च जननी त्वामेव सेवामहे । सखे, जगतां पिता त्व जगदन्तर्गतानां आसां गोपीनां पिता न किम् ? जगत्प्रसूतिः त्वं अस्माकं माता न किम् ? जगत्पतिः न पतिः न किम् ? तत् अरिष्टवृष्ट्या अन्यजुष्ट्या अलम् । यः पुमान् स्थैर्यशौर्यसौन्दर्यसागरः स एव कान्तः । अपरं कान्तं[1] सुखस्य अन्तकर तर्कयामहे । ईश त्व सारभागमनुभूय शरीरभाजां अवशिष्टं अरस अल्पभोग्य प्रपच्छसि किल । दुःखातिदूरस्य गतपारस्य सुखस्य एकभोक्तुः तस्य तव अखिल वस्तु भोग्य तर्कयामः ।

कृष्ण.— धर्मो न वोऽयं श्रुतिसङ्गताक्ष्यः ।[2]

गोप्य·— धर्मो नवोऽयं श्रुतिसङ्गताक्ष ।

कृष्ण·— माऽन्यं[3] भजध्वं रमणं विहाय ।

गोप्यः— मान्यं भजामो रमणं विहाय ।

कृष्णः—अङ्गना यूयं हिताहितातज्ञाः[4] बत । यतः अधर्मे[5] युष्माकं निश्चला मतिः अस्ति ।

गोप्यः—अच्युत प्रभो यतः अस्माकं अधर्मे[6] निश्चला मतिरस्ति हि । ततो वयं हिताहितज्ञाः ।

सः कृष्णः तासां वाग्वैखरी निरीक्ष्य प्रीत इव प्रियोक्तिपरिरम्भण-चुम्बनाद्यैः सुप्त मदनं प्रबोध्य कामिविदूरतां स्वां सत्यां विधातुमिव

---

1) कं सुखं, तस्य अन्तः यस्मात्स इति व्युत्पत्त्या ।

2) श्रुतिभि वेदैः सङ्गतानि अक्षीणि यासां तासां सम्बुद्धिः ।
श्रुतिभिः श्रवणैः संगतानि अक्षीणि यासां आकर्णान्तलोचना.

4) हितेन हितोपदेष्ट्रा पितामहेन आहिता आज्ञा यासां ताः
(हित + अहित + अज्ञाः)

5) अकर्तव्ये

6) अ इति ब्रह्मेति श्रुतेः अस्य अकारवाच्यस्य परमात्मनः धर्मे वैष्णवधर्मे ।

वल्लवीनां अदृश्य समभूत् । कृष्ण अन्तर्दधति सति ताः गोप्यः सम्भ्रान्त सञ्जाता । ता. पति-अपत्य-भवनेषु विरक्तचित्ता श्रीपुण्डरीकनयनेक्षणकार्यसक्ता त अरण्यकेषु विमृग्य मुग्धाः बहुधा चेरुः— परमात्मज्ञानागक्त अन्यत्र विरक्ता आरण्यकादिषु ससक्ताः मुनय इव । समसमय उदितविरहावस्थया क्वापि मुग्धाः समुदितघनचिन्तावस्थया क्वापि शान्ता गाढं योगिपुंगैरचिन्त्य तं कान्त वशयितुमिव [1] मधुरवचनेषु दक्षाः सत्य परोक्ष श्रीकृष्ण जगु ।

रोम्णां हर्षणकारिणि श्रवणत पापौघविध्वंसिनि
प्रेम्णा चिन्तयता विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्रादिराजोदिते
सञ्जात सुरमण्डलीषु महितः सर्गश्च षष्ठो मुदाम् ॥

---

## सप्तमः सर्गः*

मुग्धाः काश्चिद्वदन्ति स्म—हे यदुतिलक, अस्मान् धैर्यमात्रेण [2] हित्वा गतोऽसि । एव न चेत् अयाच्ञाप्राप्तं सुन्दरीणां सङ्गं कथं त्यजसि इति । मोहावस्थापन्नाः एतादृशीः प्रति शान्ता काचित् वक्ति—

*अस्मिन् सर्गे कृष्णविरहितानां गोपीनां अवस्था वर्ण्यते । कृष्णे तिरोहिते सति तद्विरहेण क्वचिन्मुग्धाः क्वचिच्छान्ताः गोप्य बृन्दावने तद्दिदृक्षया वृक्षेषु पक्षिषु मृगेषु च विचारयन्त्य. इतस्ततः अचरन् ।

1) इवेत्यनेन योगिभिरपि ध्येयस्यास्य वशीकरणं दु.सहमिति द्योत्यते ।

2) एता किञ्चिद्वदायासयिष्यामीति धार्ष्ट्यमत्र मध्यैव न तु अस्मत्परित्यागसामर्थ्यसद्भावेन ।

हे तन्वि गोपि, शोभन· अस्य कृष्णस्य तदिदमस्मत्परित्यागकार्यं उचितमेव । तस्य चरणकमलधूलि. तन्वी विधातु समर्था ।।[1] इति

हे अश्वत्थद्रुम न प्रिय भवन्मध्ये सदा वर्तते किल[2] । तस्म ज्ञापय बल्लवीजनदशां कष्टां अदृष्टप्रियाम् ।[3] नो चेत् अङ्ग, त्वद्हृदि लग्न अग्नि[4] न देहि । अथवा त्वत्सस्थितिं तरुत्व देहि । अथवा वियोगरोगरहितां ते अभिधा[5] देहि । त्व मर्त्यतां आश्रय । आर्द्रवस्त्रः पुमान् तव मूलस्य आसेचनपूर्वक परिसरन् स्वाभीष्ट लभते किल । हे अश्वत्थ, अधुना अस्माभि. वने वने कृष्णान्वेषणार्थं समन्तात् चरन्तीभिः न केवल नव प्रदक्षिणं क्रियते किन्तु त्वज्जातीयानां सर्वेषामपि । कायक्लेशवशात् समुत्थितेन घनस्वेदाम्बुना वयमपि आर्द्राम्बरा· । कृष्णविरहोत्थै. च अस्रौघैः न केवल तव मूल भवद्वेदिकामेव अर्द्रां कुर्मः । एतादृशीः त्वत्सेवातत्पराः अस्मान् किमुपेक्षसे ? एका–हे सख्य. अयमश्वत्थ. नः प्रियं विप्रियंवा न वदति बत । स्वैरमाराधितोऽपि इष्टफल न दिशति । अन्या गोपी–हरिचरणविदूरा· को नु सम्भाषयेन्नः । तदाज्ञारूप च सुकृतमपि किंवा फल सम्पादयेत् ?

स्वान्तरसंस्थितं प्रेष्ठं कृष्ण अयं न दिशतीति भृशा आर्ताः समस्ताः गोप्य. अश्वत्थोपरि कोपात् शापमयोजयन्निव । कथम् । "हे अश्वत्थ, त्वत्फलं सतां निष्फलं स्यात् ते जनिः विष्कातोऽस्तु । तवेयं छाया निशि विगेया[6] अस्तु । तव हृदि क्रूर.वन्हिरस्तु । त्वं सदा न स्पर्शयोग्य· भव इति" । योऽयमश्वत्थः अस्माक वचनं न हि शृणोति प्रत्युत्तरं वा न वक्ति,

1) रामावतारे शिलीभूताया. योषित्करणात् ।

2) मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे ।.अग्रत: शिवरूपाय वृक्षराजाय ते नम· ।

3) अदृष्ट· प्रिय कृष्ण. यस्या सा ताम् ।

4) "वन्हिः अश्वरूपेणात्र तिष्ठतीति अश्वत्थः– निरुक्तम् ।

5) श्व न तिष्ठतीति अश्वत्थः

6) दिवा विभीतकच्छाया रात्रौ अश्वत्थसम्भवा । दिवानिशि नरच्छाया हन्ति पुण्यं पुराकृतम् ।

असौ मूकः बधिराग्रणीश्च भवतु । योऽस्माकं रमणं नैव अदर्शयत् स्वान्तःस्थितोऽप्यच्युत. नैतद्दृष्टिपथं प्रयातु । किं बहुना यः द्विजकुले प्रेत्य न स्वर्गतः ब्रह्मराक्षसः असौ तत्पार्श्वे वसतात् ।

गोप्यः— हे जाति, मालति, अग्रचे तुलसि, अयि मल्लिके यदि अस्माभिः कदापि जन्मनि युष्मभ्य कृष्णाङ्घ्रिसङ्ग अदायि तर्हि तदुपकार स्मृत्वा तस्य योगिजनप्रियस्य कृष्णस्य योगं अस्माक समादिशत"

"पुण्यभूजे वरयतीन्द्रैर्वन्दिते हे तुलसि त्वं कृष्णांघ्र्यम्बुजे मिलसि । वयस्याः अस्मान् वरय । अम्ब, त्वामन्तरेण वनजाना वनाज्जातोऽपि गन्धः मनसिजादेः[1] मनसि निर्वृतिं न निर्मिमीते। हे बत जात्यादि पुष्पलताः चान्द्रप्रमोदकरचारुकराभिराम वृन्दावन वनं भवदीय. वासः किल । वृन्दस्य अवने समर्थे वृन्दावने जाताः यूयं मन्मथबाणैः युष्माकं पुष्पैः व्रजसुन्दरीणां वृन्दं हा वृथा दलितं कुरुत । हे साध्व्यः भवत्यः नक्रातिभीतगजगीतचरित्रगातं[2] नयनोत्सव त कृष्ण नः सन्दिशन्तु । कृष्णप्राप्त्यनंतरं वयं युष्मान् कृष्णांघ्रियुगले विनिवेश्य पद्मासनादिसुर सञ्चयेन सत्कृताः कुर्मः । बत जात्यादयः नतजनस्य बन्धुं सान्द्रसौन्दर्य सिन्धुं उदारहारं यदुकुलावतंसं कृष्णं यच्छत । तदनु प्रहृष्टाः वयं इष्ट कारिणीः युष्मान् परमपदयुगाब्जे पूरयामः" इति व्यलपन् ।

"कृष्णसम्बन्धिन्यः गेयमाला. समालम्ब्य कृष्णस्य कृताङ्गसङ्गा[3] एताः जात्यादयः, गाढं अस्माकं कृष्णेन परिरम्भणे कृते मध्यस्थितानां स्वासां आयासं आशंक्य आसु गोपीषु पत्यु कृष्णस्य मार्गं न वक्ष्यन्ति तस्मात् अन्यत्र गच्छन्तु ' इति च ।

"द्विरेफः अन्यस्यां वल्ल्यां अञ्चनात् मुकुलितं, मन्दमरुता चलित सरसीरुहस्य आस्यं अन्वेति । अनुसरति । हे सतां नाथ, सदयानां अग्रेसर

1) मनसिजस्य आदिः यस्मात्सः तस्य हरेः
2) अनेन मन्दबुद्धीनामपि अनुग्राहकः हरिः इति द्योत्यते
3) अनेन सपत्नीत्वं ध्वन्यते ।

सांमुखस्य कृष्ण विमुखमपि अनुसरन्त द्विरेफ पश्य । किं न परित्यजसि खिन्नहृदस्त्वदर्थे ?" इत्यपृच्छन् ।

"हे पद्मवति सरसि, पीवरांसं अस्माकं प्रिय कृष्ण क्व तिष्ठतीति उदीरय । स तु नारायण [1] तवोदरे निगूढ अस्ति । बत हे अम्ब त्वं हि स्वभावेन मधुरा[2] इति प्रार्थ्यसे । कृष्ण न वदसि चेत् अस्माक शोकतप्तानां दृगम्बुनिकरै कलुषा खलु स्या: । हे पद्मिनि पत्या सम तब जले विमले विहृत्य त्वां कुचौघकुङ्कुमेन रञ्जितां कुर्म. । जलक्रीडाय[1] चं अस्माक प्रसन्नै: मुखसारसै शोभमानां त्वां स्वर्मुक्तपुष्पनिकरै: परित सुपूर्णां च कुर्म" इत्यवदन् ।

"इयं पद्मिनी स्वीयप्रवाहभरेण धिक्कृतलोकवार्ता, भृङ्गावलीभि: चुम्बिताखिलसरोरुहकोमलानना अतएव इतरेषा आर्ति अजानती नवाम्बुदनु निजं कृष्ण न न कथयेत्" इति च ।

"भो: पद्मानि पयोब्धिसुताकलत्र कृष्णं शंसत । स: युष्मद्वनेषु वसतीति वदन्ति सन्त:[3] । अपरथा जीवनकृते रचितां अस्माक ललाटलेखां विमार्ष्टुं कुक्षिस्थिताय विधये[4] वा शसत ।" यत् इमानि पद्मानि न: सपत्न्या:लक्ष्म्या: समाननामानि[5] सदा तस्या: गृहाणि च । अपि च अस्मान् द्विषत: तदीयपुत्रस्य कामस्य अस्त्राणि इमानि पद्मानि । तस्मात् अन्य देशं गच्छत ।"

हे चूत, हे नारिकेल, हे पनस, हे आम्ल कृशानां अस्माकं कृष्ण-

---

1) नारा आप अयनं आश्रय. यस्य स ।

2) अपा मधुररसस्य स्वाभाविकत्वात् ।

3) तुलसीकाननं यत्र यत्र पद्मवनानि च । वसन्ति वैष्णवा यत्र तत्र सन्निहितो हरि: ।

4) कमलासनत्वात् ब्रह्मण: ।

5) सपत्नीनामधारणात् तद्दासभूतानि ।

पदवी वदत। यूयं हि परान् युष्मत्क–पुष्पाणि फलानि वल्कलानि मूलानि पत्राणि छाया, समुल्लसितपल्लवकोटराणि इत्यादिभि पुष्णीथ[1] ।

हे तिन्त्रिणि तूष्णी आस्व । तव फलानि अपि सदा वक्राणि । सा त्वं प्राणिनां ताडनकर्मसु उपकुरुषे । अस्माक नारिकेलेन कि प्रयोजनम् ? यः अभ्रचुम्बिभि नरैःअलक्ष्ये मस्तके त्वया पक्षिणाऽप्यग्राह्य छाया श्रितानां अध्वनीनां मृतिद, शस्त्रेणैव बलात्साध्य फलं दधत् सः त्वं अपि आस्व । सखि यश्चापक्वं फलसम्मित भुविगलैरज्ञेय दुर्जरकण्टकैरावेष्टितं फल धत्ते सोऽयं पनसः प्राक्काकभोग्य ध्रुवम् । अयं चूत फलै पुष्पैश्च तोषितखगः स्वोपान्तगानां नृणां पक्वानि फलानि प्रददाति । अयमस्माकं मनस्तोषाय न स्यात। यश्च कन्दर्पमन्त्रिणि वसन्ते समीयुषि सति सरागः । कन्दर्पपक्षपातिनां पिकगायकानां हर्षहेतु । तद्वन्दिनः शुकचयस्य सखा । तदीयानां बाणौघानां जन्मधरिणी स हि चूतः नस्तोषाय न स्यात् ।

प्रान्ते निगूढवल्लि[2] हे माधवि इह श्रीमानिन्याः लक्ष्म्याः मानदं कृष्ण आदिश । नोचेत् त्वदीयां स्थितिं– माधवीत्वं– देहि । तत्र नाम्ना अपि माधवीत्व[3] अस्ति ।

एषः 'अशोकः' अपरेषां वेदनां न जानाति । पदाहतेरेव परोपकर्ता कृष्णवियोगेन शिथिलात्मनां नः कार्यकारी न स्यात् । हे सख्यः तस्मात् अपरत्र प्रतियात ।

"सुरसंसदि गीत, दानशील हे पारिजात, सिद्धगम्य श्रीनन्दनन्दनं कृष्णं उदीरय । आश्रितानां नानाविधानि रत्नानि रासि किल, अस्मभ्यं तु अच्युताख्यहरिन्मणिमेव देहि ।" अस्माकं कृष्णांघ्रिलाभेन निजावमानं[4] चेतसि विशङ्क्य अयं पारिजातः निजं कृष्णं न न दिशेत् ।

1) सर्वस्वेन परपोषकाणां भवतां वाङ्मात्रेणास्मत्पोषणे न प्रयास ।
2) अनेन योषिदन्तरसहिष्णुत्व ध्वन्यते ।
3) माधवस्य इमाः माधव्यः ।
4) पारिजातादपि कृष्णांघ्रेः सहस्रगुणित फलदातृत्वात् ।

किञ्च असौ अस्मत्सपत्न्य. सिन्धुपुत्र्या लक्ष्म्या. सहोदर., सहस्रनेत्रा-र्हणेन दृप्तवृत्तिश्च ।

कमनीयमूर्ते कृष्ण ते गीतेन गोऽरति-शर्वपूर्वाः गीर्वाणवर्याः अपि नम्रभावं नीताः किल । तस्मादस्मान् स्ववशे विधातु एतावता अदृश्यत्व-दूरगमनादिना किं प्रयोजनम् ?

हे मुरलि, मोहनं परमहंसानां अभ्युदयप्रद उदयदिन्दुश्रीमुखं वीतशोकं मुररिपु त शंस । न वदसि चेत् हे तरुणि मुरलि अस्मिन् वृन्दावनान्ते दृश्यमानं इद तव कुलं अस्मद्विरहदहनभासा हन्त निर्दहामः ।

हे वृन्दावन नः कृष्ण-वर्त्म वद । नो चेत् प्रियस्य विप्रयोगात् जनित पुमास[1] त हि दास्याम । अङ्ग तेनाग्निना त्वदीयै. लतावृक्षादि रूपैः अभ्युदयैः साक गोपललनाख्यभास्वच्चकोरीचये प्रज्ज्वलिते सति पुनस्तव निरर्थकं नामधेय को वा कविः कीर्तयेत् ।

शान्ता– सखि तरुः [2] अय अज्ञः नैव जानाति कृष्णम् ।

मुग्धा– किमिति न जानाति ?

शान्ता– विधिनिर्देशात् ज्ञानशून्यो हि वृक्षः ।

मुग्धा– यदुतिलकवियोगात् अस्तु मे ज्ञानहानिः, गतविरहभयस्य ज्ञानहानिः कुतोऽस्य ?

मुग्धा– सखि कथय स कोऽयम् ?

शान्ता– तन्वि, पीयूषरश्मिः ।

मुग्धा– विशति कथ उदग्रं तर्हि मे कालकूटम् ?

शान्ता– हरिरिव[3] पदमात्रश्लाघ्यधर्मा स नूनं
वहति गरमगौरं ह्रासभागेप चन्द्रः ।

---

1) कृष्णवर्त्मानिम् अग्निम् ।

2) तरुरूपवृन्दावनं वा ।

3) अनिष्टं हरतीति हरि इति व्युत्पत्तिसद्भावेऽपि गोपिकानां अधुना अनिष्टप्रदत्वात् । पदमात्रेण श्लाघ्यधर्मत्वम् ।

धन्ये यामिनि त्वं कामिनीव शशिन[1] सानन्दं आचुम्ब्य तस्य मान्यैः करैः सुधारसधरैः सदा आलिङ्गिताङ्गी तद्विश्लेषात् चकिता देशान्तरे प्रस्थितं तं अनुयासि[2] बत । अध्वनि कञ्जनयनाय[3] कृष्णाय अस्मन्मनोवेदनां शंस । यस्यां निशाचराः प्राणहराश्च चोरा सञ्चरन्ति सुबोधाः बुधाः न चरन्ति, या च यामिनी स्वयं कृष्णपक्षे अप्रियसौभगा सेयं रात्रि, हे आर्याः कृष्णपक्षावलम्बिनीनां अस्माकं आनन्दकरी किम् ?

कालिन्दि, कञ्जदलायताक्षं तं कथय । त्वं कृष्णेतिनाम्ना नैल्येन गुणेन च नन्दसूनोः सदृशी ननु । सखि, ऋषयः शान्तगम्यं ब्रह्मण्यदेव, कृष्ण भवत्याः ब्रह्महृदे[4] कृतगृहं ब्रुवते । कालिन्दि त्वं अघान्वितानपि सतः पवित्रात्मनः कृत्वा तव भ्रातुः यमस्य निकेतं प्रति कदापि गन्तुं नैव मुञ्चसि । किन्तु प्रीता सती क्षीरपयोब्धिवासनिरतान् तान् आश्रितान् करोषि । तथाहि । भर्तरि स्निग्धे सति[5] कामिनीजनस्य रुचिः अलं भर्तृपक्षे एव हि । यमुने त्वं रङ्गत्तरङ्गचयैः सङ्गतवायुना त्वत्समपी कृतालयानां जनानां माङ्गल्यदा किल । तव अन्तिकवने भृङ्गीः इव सञ्चरन्तीः सङ्गीतकृष्णचरिताः अस्मान् उपेक्षसे किम् ?

हे मन्दमारुत मुकुन्दस्य पदाब्जगन्धश्रिया माननीय मानिभिरगम्यं तं कृष्णं इह आनय । नो चेत् अङ्ग वायो अस्मद्हृदिस्थितं तव समानजातिं प्राणं बहिर्नय । अथ कृष्णपादे अर्पय । त्वं अतीन्द्रियस्य अमित विक्रमस्य पदाब्जगन्धं प्रदर्शयसि । हे अदृश्य, दृश्यात्मविशेषधर्मन्[6] परमस्य तस्य साम्य[7] अपेक्षसे किम् ?

---

1) चन्द्रस्य निशापतित्वात् ।

2) यत्र यत्र चन्द्रः तत्र तत्र रात्रेः गमनात् ।

3) कृष्णज्ञानाय तल्लक्षणकथनमेतत् ।

4) अक्रूराय श्रीकृष्णः स्वात्मानं यत्रादर्शयत् तस्यतीर्थस्य नामब्रह्महृद इति ।

5) क्षीरसमुद्रस्य चिक्कणतागुणयुक्तत्वात्स्निग्धत्वम् ।

6) अनुष्णशीतगुणाख्यधर्मविशेषेण गम्यत्वम् ।

7) दुष्टेभ्यो अदृश्यः शिष्टेभ्यो दृश्यः कृष्णः ।

हे पक्षिण: कृष्ण उदीरयध्वम् पापापहं पावनपावन तम्। नोचेत् अस्मच्छ्रोत्रस्य शल्योपमितं एतं. भवत्कण्ठविशारणं किम्? सखि, परपुष्ट: स्वरेण शौरिं स्मारयन् न प्रयच्छति। स विस्पष्ट पोष्टु विप्रलम्भको वै।

"हे कृष्णसार, नेत्रोदयस्य भर बिभर्षि। आत्मदृष्टे कौतुक श्रीकृष्णवर्ष्म त्वया अलक्षि किम्? भवत. श्रोत्रस्य इयं उन्नति: चकास्ति मुरलीरव श्रुत किं भवता?"

गोपी– "नाथ निगमविदूर: त्व नृणा दूरदूर: यदि तर्हि अस्माक हृदयकमलत: किं न अपैषि?"

अन्या– तरुणि, तव तनुवियोग: सम्मत:?"

पुन गोपी– "मनोज्ञे, प्रियपुरुषवियोगात् तनुवियोगं दु:सहं न मन्ये।

एका गोपी– सखि कृष्णस्य अदर्शनमात्रेण त्वयि तनुकाश्यं क्षणेन अतदैन्य च अजनि। अत: कृष्ण: इयं न प्रगल्भा इति त्वयि मान न वहति।"

अन्या– "कृशतरनिखिलाङ्ग्या. मम दैन्यं न दीननाथप्रयुक्तं किन्तु विश्लेषवन्हे:।"

गोपी काचित्– अनृतलपित एनं नार्थयध्वम्।

अपरा गोपी– तत्तथा। परन्तु अस्य गीत-वाक्य–अलकाभा: एते परभृत-शुक भृङ्गा: श्रीमुखश्री: चन्द्रश्च इत्येते पथिपथि अस्मच्चेत: प्रार्थनाशील विदधति। [1]गोप्य: एकां प्रति– "रमणि, रुचिररूप: कृष्ण: तव विदूरे आसीत् किम्?"

सा– "तन्वि, नहिनहि, मम पुण्यं दूरे प्रयातम्।

पुनस्ता.– "बत यदुकुलनाथ: स त्वया मृग्यते किम्?"

सा– "सखि, नहि, तेन सह नीतं चित्तमन्वेषयामि।"

1) कृष्णेन स्वसमूहात् या प्रेम्णेव नीता तामपि वियुक्तां दृष्ट्वा गोप-हासमाहु:।

वत सख्य· चित्तं सुस्थिरं विननुत। स· कृष्ण· अस्मन्मृदुलहृद् अवलोक्य स्थैर्य आलम्बयेत्।

अन्या:- "अयि सखि, अनुवनं समन्तात् सञ्चरन्त त कान्त अनुसरत् अनुरक्तं तत् चित्तं क: स्थिर कारयेत् ?"

स विधिरपि निदेशं तस्य नूनं विधत्ते। विरहदहनशान्ति यत्र मूर्च्छां ददाति। अपि निशि हृदयान्त: कृष्णसंश्लेषशङ्की न दिशति च सुपुप्ति हा हता· किं विधेयम् ? यदि अस्माभि मधुरं कृष्णस्य गाथामृत प्राक् अपायि तर्हि मुकुन्द: स्वा स्फुरदधरसुधां अस्माकं यच्छेत्। किञ्च क्वचिदपि विमलं स्थावर जङ्गमं वा निजधाम–कृष्णप्रतिमा–यदि अदर्शि तर्हि हरि: आत्मान अस्माकं दर्शयेत्। सौन्दर्यधामन् कृष्ण तव कररुहपदं· भास्वत· गात्रस्य विश्लेषभीत्या न: मृति: नानुमता। अधुना तवादर्शनाच्च असुभृतिरपि नानुमता। वय अधिगहन उभाभ्या बद्धकण्ठा इव स्म·। हे कान्त, कृष्ण, अस्माक नयनगतं कामस्य नलिनशर तव वक्त्रेन्दुकान्त्या शमय। अस्माकं कुचस्थं कामस्य उत्पलबाण तव नवपदाख्यरविभासा शमय। सदय तव दासी· गाढालिङ्गनेन अर्धगात्री: विरचय। तेन च कन्दर्प दर्पं शमय[1]। अयि, रमण मुरारे, सुन्दरीकान्त, शौरे, नरकमथन[2] कृष्ण, प्रौढ वाराशिधिष्ण्य, दानशक्त्या करजितसुरवृक्ष, अहंकृतानां आत्मीयानां शिक्षाप्रद, स्वकविजयसहाय, ध्वस्तधर्मान्तराय कन्दर्पदर्पं शमय" इति गोप्य: व्यलपन्।

वृक्षेषु पक्षिषु मृगेषु कृष्णं विचारयन्ती: प्रमुग्धहृदया: श्रुततत्व कान्ती:[3] प्रेक्ष्य आविर्बभूषुरपि रम्यानां तदीयानां वाक्यानां भाव पुन: विविदिषु: कृष्ण: तदा तिरोऽभूत्।

जितापत् सुखी कृष्ण: कामिनी इति कृत्वा यां गोपी सुखयन् निनाय कामि-नीति-जिता तेन कृष्णेन काञ्चित् पद्यां (मार्गं) आसाद्य सा

1) गाढालिङ्गनेन अर्धनारीश्वरप्रतीत्या कामस्य दर्प: शाम्यति।
2) नरकासुरनाशक, स्मरतां नरकविनाशन
3) श्रुतं तत्वं यैस्ते तत्वज्ञानिन: तेषां कान्तिरिव कान्ति. यासा ता.

उज्झिता । सा कृष्णेनोज्झिना गोपी असारससारे अरसा सुसारे सरे सारे स्त्रोये उर परसि सरत्सारसपक्षिवच्छोभमानकुचा सुरसूरसं [1] ससार । स्मरतात एन अलक्षयन्ती सा तं एनं कृष्णं स्मरता हृदा आत्तखेदा 'विधे सौम्य अति दूरे न नय, नयनातिदूर न कुर्या.' इति जगाद। "हे ईश कान्त, दिवाऽपि [2]कुट्टयामपि (वनगमनेन) अन्तर्हित त्वां कालभतेजसा [3]उपमानेन स्वान्ते बिभर्मि । अज इह वने तं त्वां विना साय का अन्त : हित लभते ? हे ईश, त्व सार: सुरस रासि । तत् एहि । हे महि ! इहवने ससादां (दु:खसहितां) वेदवादविद· कृष्णस्य सदसि वद । हे ईश कृष्ण सरसा मधुपानां आलि. सरसी उप कण्ठ उपेत्य मधुना मुदितां सभया [4] सभयां, अलि अनुनीय उद्दता अधुना वसन्तकाले अनुयाति च पश्य । अङ्ग,कृष्ण नगे: आयतस्य आकाशपरिमितस्य अगस्य गोवर्धनस्य सानु समेत्य पुस्कोकिलसुस्वनेन गायता शमितागसा त्वया का नु मृगाक्षी न विमदीकृता ?

"सर्पतल्पस्य कृष्णस्य नन्दन, आनन्दकारण हे कन्दर्प यत्र सतां बन्धु. हरिरास्ते त देश मां नय । हे र[5] अहं गोपी कृतिदूरवृत्ति:[6] , अमानया[7] मया कारणेन, अहंकृतिदूरवृत्ति. त्वं मां (कृष्णसामीपं) नय । याऽहं कृतिदूरवृत्ति:[8] अत एव अमाया: [9] अनयस्य अहंकृतेश्च दूरवृत्ति: रमा न।[10]

---

1) सुरान् सूते इति सुरसू'—लक्ष्मी । सा उरसि यस्य स: तम् ।
2) गृह कुट्टी च मन्दिरम् ।
3) कलभ. करिशावक. तत्सम्बन्धि कालभ
4) सरोवरे वर्तनादया अनुष्ठातृब्राह्मणसंसदा
5) कन्दर्प, र. पुमान् पावके कामे इति रत्नमाला ।
6) कृते गमनादिव्यापारस्य दूरा वृत्ति: यस्या सा ।
7) अहकाररहितया
8) कृते उत्पते दूरा वृत्ति: वर्तनं देहाद्यवस्थानं यस्या: सा अप्राकृत विग्रहा ।
9) मा = ज्ञान अमा अज्ञानं तस्या· ।
10) एकपादयमकश्लोकोऽयम् ।

हे अतात[1] तत-अतत-अतीत-तत्त्वततितात[2] तां[3] अतते[4] । तत.[5] अत्ति । तत् ते तत्ता[6] -तौतातीत-ईती अतीते[7] । कृष्ण ते अधरामृत दिशते ते तनुं अर्पये । विहरता त्वया इह मच्छरीरे रतौ विहिते सति अराणां (पापानां) चये हृतिं विरचये । इत्यनेन प्रकारेण भवता अभवता[8] अदायि । मुनयः य तीव्रैः योगैः अते अगु त कृष्ण रन्ता इति मत्वा कापि गोपी इत्थं गिरा अर्चयन्ती गलितात्महारा हा रामकृष्ण इति शुचार्ता अपतत् ।

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते
सञ्जातः सुरमण्डलीषु महितः सर्गो मुदां सप्तमः ॥

1) जनकरहित ।

2) ततं व्याप्तं आकाशादि, अततं = अव्याप्तं पृथिव्यादि अतीताः मुक्ताः इति तत्वततेः तात ।

3) तां पूर्वोक्ततत्त्वततिं ।

4) व्याप्नोति, अत सातत्यगमने इति धातोः कर्तरि लट् ।

5) अनन्तरम् ।

6) जगदैक्यम् । तौतातीताः मीमांसकाः तेषां ईतिः निरीश्वरत्वरूप बाधः ।

7) अतिक्रान्ते ।

8) भवः संसारः । न भवः अभवः तस्य भावः अभवता मुक्तत्वमित्यर्थः.

---

## अष्टमः सर्गः[1]

बेत अमल कृष्ण ! यान् वीक्ष्य इला भिया चलति ते विरहवन्हि बेला [2] मलयानिला., अलयानिला [3] अस्मान् तुदन्तितराम्-कथमिव । अखिलधाम जगत् (प्र) लयानिला इव । हे अष्टैश्वर्यप्रद देवेश कृष्ण, देवेन्द्रे अशनिसहितवर्षस्य हेतौ सति, असिपातोज्जातासितघातकल्पे दावे अस्मान् आवेष्टयति त्व पाता अभू । निजे भक्ते समान [4] स त्व अद्य अस्मान् मा त्यज्य । हे नानाननानानुत् [5] (नानाआनन-अन-नुत्) इन, एन नून अनन्ने [6] न । अन्निना [7] स. अनन्न पुरुष. नौ. नु । नानान्नैः नुन्नेन अनेन एनसा ना (पुरुष ) ऊन. [8] न भवति । केवल न न ननु । स्वः [9] अमित्रहृदा दैत्याना मनसा अहित, हृदा [10] अन-साम-हित-स्वर-

1) कृष्णविरहकातरा व्रजाङ्गनाः त प्रार्थयन्ते ।
2) विरहवन्हे बलं येभ्यस्ते ।
3) अलय नाशरहित अनिलः प्राणवायुः यासां ता (जीवतीरित्यर्थः)
4) मानेन अभिमानेन सहित. समान ।
5) नानाअनेकानि आननानि यस्य स चतुर्मुख., पञ्चमुखो रुद्रो वा । अन =मुख्यप्राण । तौ नुदति इति नानाआननअननुत् । ब्रह्मरुद्र वायुप्रेरक ।
6) अन्नरहिते पुरुषे, 'विषया विनिवर्तन्ते निराहारस्य देहिनः' इति वचनात् ।
7) अन्नवता विषयलालसानाम् ।
8) रहित । तथाच अयमर्थः— हे ब्रह्मवायुप्रेरक, प्रिय कृष्ण, पाप नूनं अन्नरहिते पुरुषे नास्ति । अन्नयता पुसां सः अनन्नः पुरुषः संसाराब्धि तरणे नौः, नानाप्रकारैः अन्नैः प्रेरितेन अनेन पापेन, पुरुषः रहितः (मुक्त =दोषोज्झित ) न भवति । केवलं वयमेव पापोज्झिता न भवाम इति न । अत. कृतापराधासु अपि अस्मासु अनुग्रह कार्य इति गोपीनां प्रार्थना । एकाक्षरपद्यमेतत् ।
9) स्व =स्वर्गस्य अमित्र विरोधि हृत् येषां ते दैत्याः ।
10) अन मुख्यप्राण तस्य सामानि मुख्यप्राणेन गीयमानसामानि । तेषा हित. स्वराः तेषा मित्र । मुख्यप्राणगीयमानसामवेदप्रिय ।

मित्र, [1]स्वर-मित्र-हृदां मनसा महित, अनसा[2] असमहितस्वर, हृदा मित्र[3], हे कृष्ण हे असुरमोदस्य अरे, वर, यासु अस्मासु रमा वर्तते ताः ईमाः किङ्करीः तरसा वरय। उदारे त्वयि इद[4] न गुणोचितम्। हे कवीश कृष्ण, यदि भवान् वने दासी अस्मान् नो वृणीत तर्हि ईश आत्मनः प्रवृत्ता [5] गौः अपहृता भवति। क-वीश-गौरीशैः आत्मवृत्तौ [6] (स्वान्त करणे) हृत, त्व न अवने इनः। तस्मात् (अस्मदङ्गीकारे) ऋणी आसी.। हे प्रभो, तव अमानवेषु[7] देवेषु स्थितिं जानतीः इमाः न मा त्यज। नवेषु (स्त्रीजनेषु) स्थितिं मा कुरु। असौ तव प्रिया मा (लक्ष्मीः) नवा किम्? हे प्रिय इमाः गोप्यः इह भूलोके स्थितिं न ईषु। किन्तु नवे इषौ स्थितिं ईषु. [8] ईश, त्वयि चक्षुर्विषये सति व्रजे तोषसित विकुण्ठ मह्ं भजेम। न चेत् त्वदीक्षोत्सवस्य भङ्गहीन त विकुण्ठ उषसि हन्त व्रजेम। वियोगे तव गोविन्द दिवसोऽपि भयङ्करः कान्त, दिशाव्याप्ततामिस्त्रा इय निशा किं पुनः? हे कृष्ण शरैःसमा समायता इय निशा न अयते। हे असमायते[9] कृष्ण भवान् स्वेषु समायते[10] किल। तेन भक्तेषु वैषम्याभावेन हे समाय[11], समायतुभ्य नमः हे असमाय[12] सः

1) स्वर प्रणव स्वरे मित्रं स्नेहयुक्तं हृत् येषां तेषां प्रणवोपासकपरमहंसानाम्।
2) शकटेन शकटासुरेण।
3) हृदा वक्षसा मित्र इव सूर्य इव सूर्यवद्दीप्यमानवक्षःस्थलयुक्त इत्यर्थः।
4) अस्मदुपेक्षणम्।
5) सेवार्थं सम्भवन्तु सुरस्त्रिय इति ब्रह्मद्वारा स्वप्रवृत्ता वाणी।
6) कः ब्रह्मा वीश गरुडः गौरीशः शिवः तैः ध्यातेत्यर्थः।
7) निर्धारणे सप्तमी देवानांमध्ये श्रेष्ठ. इति।
8) तवानङ्गीकारे नूतनशराग्रे बलात् पतित्वा मरिष्यामः इति भाव।
9) असमा असदृशी आयतिः व्याप्तिः यस्य सः। तस्य सम्बुद्धि.।
10) समवदाचरति। सर्वानपि भक्ताननुगृह्णातीत्यर्थः।
11) मायया लक्ष्म्या सहित समाय तस्य सम्बुद्धि.।
12) असदृश. आय. लाभः यस्य स.। तस्य सम्बुद्धि। अवाप्तसकलकामेत्यर्थ.

ते यते वर्त्म मा भज । हे उदधिमन्थसङ्ग[1] मुरारे, अतिकार्यः अस्मत्कर' दधिमन्थस्य सङ्गमपि कर्तु न यतते स्म । तेन त्वदघ्रिजुष्टि विना अपर कार्यं का वा आर्या करोति ? हे दीनबन्धो यदि आसु गोपीषु दया नास्ति तथापि हे इनबन्धो[2] प्रिया इय नदी सूर्यपुत्री यमुना हि आप्या। यस्मात् अस्याः यमुनायाः भाग्यस्य अरिः असौ कालियः तोयदसौभगस्य तव ओजसा हृत.। हे रामावर हे कृष्ण हन्त उदारान् सुरान् अमु देवलोक च विहाय तव सङ्गसिध्यै इह (भूमौ) आगता. वरेण सिद्धभद्राः[3] सिद्धानामपि भद्रा[4] इमाः रामाः न मुञ्च । हे सुदय, दुष्टाना भयप्रदाभ, नाथ, चकितासु आसु गोपीषु दया उचितैव यदा भवान् न वर्तते तदा अदोहं[5] अदः अस्मदगृहं अपि भयदम् । उत्स्वनेन जलेन युक्त इदं वन भयद न किम् ? हे निर्जितारिकुल, सदय, विभो, परिभ्रमणेन रञ्जितः वियुक्ततरुणीनां स्थिरताहृत् अय भृङ्गचयः तव पदाब्जयुगे भ्रमरं अस्माक हृदय अर्दयति । हे अच्युत विषयेक्षया सपदि दृक्क्षतिदृक्[6] दृष्टिः अस्माकं, तव चरणाम्बुजं, करसरोजरुचं, कवि वर्णनस्य आकरसरः अजरुच[7] तव नाभि च दिदृक्षति । सदा स्मरतः निर्मलस्य देहिनः प्रिय अस्माक प्रियं तव पदारविन्द हृदि देहि । हे अज कृष्ण त्व शान्तानां स्तवनस्य प्रियः । पूर्वं तव परिरम्भणादिना शान्तः तव नन्दनः कामः अधुना जयन् अस्मान् निहन्ति । तत् एहि ।

हे चम्पक जयोदयं अच्युतपदाम्बु[8] ते अस्ति ननु । अच्युतस्य

---

1) उदधे मन्था' मन्दर' तस्य सङ्गो यस्य सः ।

2) सूर्यबन्धो, सूर्यमण्डले स्थितित्वात् ।

3) सिद्ध सपन्नं भद्र मङ्गलं यासां ताः ।

4) मनोहरा

5) दोहनक्रियया रहितम् ।

6) दृश ज्ञानस्य क्षतिः विनाश' तां पश्यतीति दृक्क्षतिदृक् ।

7) अजस्य ब्रह्मण. रुक्कान्ति' यस्मात् ।

8) अच्युतपादाख्याकाशाद् वृष्टं ।

पदाम्बुजयोः उचितं अलिना अकल्पित पुष्प च तव अस्ति । अतः मलिनैः अकलित तं कृष्णं अस्माकं इह आशु ईक्षय ।

अयं अलिः मधुद्विषं न हि वेत्ति । तथापि शोभने अत्र चम्पक कुसुमे द्विषन् तस्य मधु नात्ति । एतद्युक्तम् । बहुपदे[1] पुंसि विषमस्थितिः प्रकृतिः एव । परन्तु इहास्मन्निकटे (कृष्णस्य) अस्थिति अस्माक केवलं विषं वितनुते ।

हे अज, यतेः अपि मोहदा, त्वदुद्यमस्य हिता जगति महिता तव मुरली अस्मन्मनः विजयते । सा मुरली प्रलये अग्रवलया कमला इव तव अधरस्य सु-धार-सुधाः पिबति ।[2] हे उदार कृष्ण रणता वधू-तति-जिता तव वेणुना विनता (नम्रीभावं प्राप्ता) अतिजिता, सुरैरपि नता यमुना नदी, ते मुदा कमल कर[3] ददतीव अल अन्तिक आगता । हे आलि, करजानां प्रसक्त्या उरुरुचा, रुरुवत्[4] चारुणा अवलोकनेन आकलितया तया मुरल्या अरुचि–राशि–अपह–प्रियोष्ठ–रस–तीर–सती रुचिरा कमला[5] अन्वकारि । हे मुरलि इम कृष्ण आनय । तव आयत वाचा जितचेतसा अन्तिकं आगताः वधूः अस्मान् निजे भक्तजने अभिनव भारवान् कमिता कृष्ण. न विसृजेत् । हे साध्वि मुरलि, विनतौ सत्यां इनता (प्रभुत्वं) न चकास्ति ।

हे अजने[6] ईश्वर, तवजनैः अविभिः ततोऽपि इय व्रजभूः भुवि ख्याता उद्भूत् । हे सुरमणे, कमला अपि तत्र गोकुले लसते । अधुना सा

1) षट्पदे । बहु स्त्रीजनेषु पदं स्थानं यस्य स तस्मिन् (कृष्णे) बहुस्त्री वल्लभे ।
2) अस्माद्योग्य-त्वदधरपानस्य स्वयं करणात् अस्माकं मनोग्लानिः ।
3) उपायनं
4) कृष्णसारवत्
5) साऽपि कमला कृष्णकरजानां प्रसक्त्या (नखक्षतेन) शोभमाना, मृगवत् चञ्चलावलोकनभूषिता च ।
6) जननरहित ।

रमणे त्वयि अलसता।[1] इति कृत्वा गोष्ठ उत्सृजेत् । हे परम विजने वने स्वजन उत्सृजत: तव मन यदि अत्र आगमन न मनुते तर्हि तव परम हंसै नुतस्य पुण्यस्य तव यशस: स्तोतार आगम[2] विनिहंसि । ईशमानी स: दण्डपाणि यम: (त्वद्वियोगभिन्ना ) तव अधिदासी अस्मान् गोपी: नयति बत । तद्युक्तम् हि । यत तव वियोग (त्वदनुग्रहवियोगे) तेन दण्डपाणिना अय पर्वतस्य च भेदने समर्थ पुरुष यतीशमान्यपि न ह्रियते किम् ? हे ईश अनादित: विनाश-नाना-आमय-देहपुष्टी त्वं उज्झसि । त्वद्विरहेण इदानी वय च अशन-अनामय-देहपुष्टी विना (ता त्यक्त्वा) त्वत्तुलना लभेमहि[3] ।

विधिशर्वपूर्वाणां सुमनसां सुमन:सरसीनिवास हे अ जगता सह त्वदभिन्नता गता (निरस्ता) । तुहिनत सकाशात् यज्वभि: नत. दहन अपरो हि । हे असदृश श्रीकृष्ण युवयो: तादृशता दहनतुहिनवत् विरुद्ध-धर्माक्रान्ता वर्तते।[4] इन्दिरा कमलासनात् भवात्, अभवात् (मुक्तात्)[5] महती किल । अरिवृतोदयदाव[6] श्रीकृष्ण तया लक्ष्म्या लतया तरुवत् भवान् परिवृत: । तव सा इन्दिरा इद जगत् अनु (स्वस्या अनन्तरं) मनुते किल । हे असम, तव निखिलेश्वरत्वसमये मतिमन: पुंस. अतिमत: निगम: अस्ति । ये असृभृत. पुरुषा: तं प्रसिद्धं वेदमपि त्यजन्ति तै: अक्ष-रहितै: अहितै स्वनय: कुत. प्रमाणात् सुभृत: ? हे अलय य: कोऽपि वादी मानै: सहितं ते जगत् अनृत कलयते स: वादी निजनये हितं

---

1) किं गोष्ठवासेन इति आलस्य उपेक्षणं असनीनिकृत्वा ।

2) "तेषा नित्याभियुक्तानां योगक्षेम वहाम्यहम्" इत्याद्यागम विनिहंसि ।

3) त्वद्विरहात् येनकेनचित् प्रकारेण देह त्यक्त्वा मुक्तौ त्वसाम्यं प्राप्स्याम ।

4) जीवपरमौ परस्पर भिन्नौ विरुद्धधर्माक्रान्तत्वात् दहनतुहिनवत् इमौ च तादृशौ तस्माद् भिन्नौ" इति अनुमानम् ।

5) मुक्तेभ्य: जात्येकवचनम् ।

6) अरिभि वृत. उदय अभ्युदय. तस्य वनाग्ने ।

रुचिर[1] कथ जनयेन् । न हि रज्जुहे-मकाशात् अभूति (अमङ्गला) क्षति अभूत् । अस्य रज्जुसर्पस्य भयहतुता, कम्पकता च न स्त. । तज्ज्ञानस्यैव भयकम्पहेतुता । निशि सुप्ते मनुष्ये सर्पाद्यर्थस्ये महिमा तान् कम्पादीन न हि राति । इह रज्जुसर्पे सर्परूपार्थे गतेऽपि सर्पज्ञानमेव तान् भयकम्पादीन् राति हि । हे अर[2] रिपां, उदारचरित, मुररिपो कृष्ण यदि अखिल जगत् भेदशून्यं तर्हि [3] मखिलङ्घिभि असुरैः अर्दिता सुराणा गभा सभा.[4] तव धाम क्षीरसमुद्र किमर्थं आर ? पुंसूक्तादिना स्तुतिरपि किंकारण आचरिता ? हे अमितोरुविक्रम, तव अभिदां वदन् श्रुत्यद्यसम्मतवाक् खरमते रमते । विरुद्धधर्मे जलधी इव विद्यमानौ जीवपरमौ क्व ? निज-योनिजयो तयो' जडधिया कलिता अभिदा (ऐक्यं) क्व । स्मृतयः, भारत, अवृणानि पुराणानि, पुरातन. वेद ब्रह्ममीमांसाशास्त्र इत्येतेषां विभव विभव[5] परम च नारायणं मानस-मयै. समयैः अनृत वदन् वादी सुसभासु सभा. (भासा सहितः) न भवति ।

फणिराजविंशमा:, अनःभयकारक' हृवने विनुतः स' कृष्णः इह वने कुत्सितान् दात् चकितात्मनां तत्कृपा वसु-हृदां सुहृदां अस्माक शं कुरुतात् । हे अज अदय[6] अस्माक हृदां सुरम तव मुखमारस, अलं सुर-नुत-ताह-भावयुक्त नयन कजयो. युगल, मनोज–मनो–जयि तत्ते सुस्मितं अयते ।

1) पराङ्गीकारार्हं यथास्यात्तथा । जगन्मिथ्यात्वे जगदन्त पाति प्रमाणानामपि मिथ्यात्वात् मिथ्याभूतप्रमाणैश्च स्वसिद्धान्त साधयितुमशक्यत्वात् ।

2) अराः दोषाः

3) मखिनः याज्ञिकाः तान् लंघयन्तीति मखिलंघिन' ।

4) भासा सहितासभाः

5) भवरहितम्

6) दयारहित इति आक्रोशेन सम्बुद्धि

इत्यनेन प्रकारेण गोपीनां कृष्णविरहजन्यं परितापं कृष्णाय शसन्निव उडुपतिः अब्धेः[1] अन्तिकं प्राप । ततः गोपीनां वक्षोजाख्यगिरिं करैः परिमृजन् [2]तासां नेत्रोत्पलं हर्षयन्, हृद्योम अनुरञ्जयन् तासां प्रमोदसमुद्रे वृद्धिं विरचयन् अच्युतेन्दुः तत्पुण्यपुञ्जानलात् उदितः ।

सञ्चितपुण्यशेषा, अम्बुजाक्षी काचिद् गोपी अन्तर्निलीनस्य मदनायुधजातघातस्य शान्तिं विधातुमिव मुकुन्दमुखसारसस्य सौरभाढ्यं ताम्बूलचर्वितमभक्षयत् । तस्य असे परिलम्बितपाणिपद्मा धन्या हृष्टमुखी अन्या गोपकन्या प्रेष्ठस्य कृष्णस्य अन्तरे अङ्कुरितायाः रासविलासतृष्णायाः पुष्टिप्रदः इव स्फुरन्मकरकुण्डलशोभिगण्डं तं कृष्णं मृदु चुचुम्बे । काचित् तन्वी गोपी रुचिरालकास्य तं रमणं कृष्णं प्रति बिम्बोष्ठचुम्बनस्य रुचिं भ्रूसंज्ञया एव दर्शयन्तीव दष्टमृदुलोष्ठपुटी सती तं मुकुन्दं तरलस्य आत्मकटाक्षस्य लक्ष्यं ततान । काचिदन्या, हे नयकोविद कृष्ण 'अहं स्वैरिणी इति कृत्वा मयि तव उपेक्षा न युक्ता' इति तं प्रति बोधयन्तीव सुखजाश्रुधारा[3] सती हर्षकराणां कङ्कणानां सुस्वनेन[4] स्वहस्तेन कृष्णस्य पाणिकमलं[5] पस्पर्श किल । अन्या रत्युत्सवार्हस्य स्वतनुमन्दिरस्य तुङ्गवक्षोजाख्यौ सत्कलशौ विकसितपल्लवैः मण्डयितुमिव कृष्णस्य चरणपल्लवं स्वकुचयोः संयोज्य आशु मारधिक्कार चिन्हं उत्पताकं कृष्णपादगतध्वजं अखनत् । पुलकैः शोभितसर्वगात्री धन्या अन्या च काचित् तं कृष्णं हृदि निधाय निमीलिताक्षी सती सर्वाभिः आभिः गोपीभिः अनुभूतं वीटिकाभक्षणादिभागं अभुंक्त । तथाहि किं नाम न सिद्ध्यति मुनिमार्गनुषा हि लोके ? गोप्यः गगनगतं विधुं परिहसन्तं अस्य कृष्णस्य मुखविधुं नयनैः दधुः । स्मरतां रणे जयदायिनी

1) समुद्रस्य कृष्णवासस्थानत्वात्

2) चन्द्रोऽप्युदयकाले पर्वताग्रे करान् प्रसारयति इत्यादि ।

3) अनेन कन्यादानधारोदकं सम्पादितम् ।

4) विवाहोचिततूर्यध्वनिसम्पत्ति

5) अनेन पाणिग्रहणं उक्तं भवति ।

अस्य चरणं ग्ननयुगेन दधुः । स्वगर्वशमनस्य अवधिं गते, कृष्णे अधिगते युगेऽपि क्षणतां दधु. ।

ताभिः गोपीभि सस्मितं ईक्षितः यदुपति. हृदिस्थाया आवृते मोक्ष प्रकटीचकार । स्वानन्द प्रकटीचकार । नः गोप्य. आलिङ्ग्य सुखदं स गुञ प्रकटीचकार । स्वकुलं तेन निजधर्म सारूप्यस न्दि दिशन् तथा रासाख्य च उत्सवं प्रकटीचकार । न हि कथा व्यर्था परब्रह्मणः । असौ शौरि सारजनिमतीनां गोपीनां ईहिताय रासमहाय रम्या स्थलो अभूत् । अमां गोपीनां ईप्सितदातरि ईशे रागात् सा रजनी असौ[1] हिताय अभूत् ।

कण्ठे आश्लेष., स्तनेषु कराग्रपात., मधुरव्याहारा., मन्दस्मितं, लोलापाङ्गनिरीक्षणं, मरुत्, सङ्गीतं शीतांशुः— इत्येतै विभावादिभिः उच्चकै. कुसुमिते वृन्दावने शृङ्गारं रस पोषयन् मधुपतिः कृष्णः गोपीमण्डलमण्डित रासोत्सवं निर्ममे । प्रेमोत्थरोमोद्गमै करैः प्रेष्टस्य कृष्णस्य असयुग पुनः पलायनभिया इव उभाभ्यां सुष्ठु आलिङ्ग्य औत्सुक्यत. वीक्षतां सिद्धानां नयनैः सम, समुदित मण्डलाकारेण स्थितानां स्वासां मध्यस्थितं शृंगारसज्ञं रस मिथोभूतकराः ताः गोप्यः क्वचिदपि बहिर्गन्तु न मुमुचुः । इन्दीवरलोचनाः ताः गोप्यः, सः शौरिः प्राग्इव अस्माकं मध्ये मनोरमां काचित् नारी नेष्यतीति भियेव परस्परबद्धमनोज्ञहस्ताः सत्यः रासोत्सवे विरेजु । विष्वक् विसर्पिनयना परिमुच्यमानवक्षोजवस्त्र– कबरीभर– भव्यनीव्यः सिञ्जद्भिभूषणगणा गोप्यः नाट्यच्छलेन, रासोत्सव पश्यतां सिद्धादीनां धैर्यं चरणैः कणशः वितेनुः । कृष्णांप्रविन्य.स्तकराब्जमालाः हृष्टाः सलीला. ताः स्त्रिय. ननृतुः । तथाहि । आनन्दमूर्तिं परिरभ्य मत्यं. को नाम. नो नृत्यति सिद्धकृत्यः ? एका बाला मुक्तगणवल्लभस्य कृष्णस्य कण्ठं आबध्य विमुक्तस्य स्वस्य कबरीभरस्य बन्धनाय अलमा सती यत्नं न चक्रे । गुरु-

1) असु=प्राणविषये ।

कार्यलाभे लघ्वर्थस्य साधने कृतिः न हि दृष्टपूर्वा ।[1] कृष्णालिङ्गनस्य भङ्गशङ्किहृदयाः ताः गोप्य. स्त्रस्त कचं वक्षोजाम्बरं उद्गतां नीवीं च न बबन्धु. किल । भर्त्रा सह रतिसूचकं तत् कबरीवक्षोजाम्बर-नीवीमोचनं दृष्ट्वा रतिर्भविष्यतीति प्रहृष्टाननाः ताः मृगदृशः अनभिमत र-प्रतोचितकर्म कबरीबन्धनादिक नो चक्रुरेवेति मम चेत. । अब्जनेत्रा काचित् कारुण्यसिन्धोः कमलेक्षणस्य कृष्णस्य करं मम कण्ठमाश्लिष्य पूर्ववत् मां न मुञ्च इति अञ्चयन्तीव तं करं चुचुम्बे । श्रीलोलस्य कोमलकपोले विलीनेन गण्डेन लोलं अन्यवध्वाः आननं कयाप्यन्यया ऽबलया स्ववक्त्रगतवीटिकाया जघ्ने । तां वीटिकां दित्सतः कृष्णस्य तद्वीटकया ताडनं सूचकमिवाभूत् । अस्यां रासक्रीडायां वरसिद्धेन सत्कृतेन आविला, अम्बरस्थितसिद्धैः सत्कृता वीणाध्वनिवत् मनोहरया गानविद्यया आतता काचित् गोपी असमस्य कृष्णस्य विलासं तान । तया नार्या लोकः नवीनाध्वनि गानवित् अभून् । भर्तु. कृष्णस्य मृदुस्वरेण कृतानुकृति. एषा हृद्य कलकण्ठवधूरिव स्वगीतं विस्ताय गीतेन च सकलेषु अद्धा मुग्धीभवत्सु सत्सु रहसीव विशंकं स्निग्धा मुकुन्दवक्त्रं चुचुम्ब । हे ईश कृष्ण आप्तकामस्य तव आभिः गोपीभिः किं प्रयोजनम् ? तथापि विलासैः अस्मान् तोषयसे इति ईरयन्तीव काऽपि बाला मुरारेः करं बलेन स्तने न्यधात् । या बाला कृष्णकरं स्वस्तने न्यधात् । सा गोपी अन्यासाधारणं स्वस्याः उरोजयुग्मे अङ्कित कुङ्कुमाङ्क आत्मभर्तु: कृष्णस्य स्वस्तनन्यस्तहस्ते स्थिरीकृत्य चारु त हस्तं अन्यमानीनां अभिरुच्ययोग्यं चकार ।

मुदावहा भासुरेण गीतेन शोभिता वृन्दावने रसलीला विभाति । अङ्गनाल्यां उदावहाभा (उद–आवह भा = जलदकान्तिः) सुरैः गीत-शोभा हरे मूर्तिः शतशः विभाति ।

1) नित्यमुक्तस्य बन्धने महाप्रयोजने लब्धे सद्योमुक्तस्य कबरीभरस्य बन्धने यत्नायोगः ।

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि ।
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते ।
सञ्जातः सुरमण्डलीषु महितः सर्गोऽष्टमोऽयं मुदाम् ।।

---

## नवमः सर्गः[1]

मण्डलीकृतानां मनोरमाणां रामाणां कुण्डलद्युतिभिः रासभूप्रदेशः सुदीपितः आसीत् । गण्डचुम्बनकुतूहलानां कामेन अखण्डितानां आननसरोरुहाणां धाम सः रसविलास जयति । नृत्तातिशयात् तत्र गोपीनां कबरीबन्ध : मुच्यमानाः, ताभिः रसदाता मुकुन्दः प्रोच्यमानः । कुचकण्ठपार्श्वादौ नखलाञ्छनाख्यः चन्द्रः प्रथमानः हरिविक्रम, वृन्द च कथ्यमानम् । सः रासोत्सवः हृष्टरोमनिकरैः हृतचित्तैः वृन्दावनस्थ मृगादिभिः दृष्टरम्यविभवः, गगनस्थैः स्तुतमुकुन्दचरित्रैः निर्जरगणैः आवेष्टितश्च । विलसन्त्या चारुपादतल्लानां सन्नखानां च कान्त्या, विचरन्त्या अधीर नूपुराणां रुचा सः रासभूप्रदेशः रत्नमयैर्घण्टपपङ्क्तिभिः भूषितभूरिवाभूत् । सः रासविलासः वेणुवाद्यपटुना व्रजनारीमानदेन हरिणा अन्तरहारी आनत–अब्जजनि–मारुत–गौरीप्राणनाथ–नयनोत्सव कारी आसीत् । तत्र पादसञ्चरणेन तालः दर्शितः । स्वादुगीतानां वर विभ्रमाणां वीक्षणचुम्बनादीनां समूहः अभवत् । तेन रासोत्सवेन श्रीधरे- क्षणरसायनलोलेन द्विज–मृगा–अंध्रिप–शैला. अपि मोदिताः । सः रास विलासः विचित्र हारसरस्य हारणशील । तत्र कृष्णस्य मूर्तीनां शतं इन्द्र-

1) अस्मिन् सर्गे श्रीकृष्णेन बृन्दावने गोपिकाभिः साकं विहितस्य रास- विलासस्य वर्णनं क्रियते ।

नीलरत्नानि । पुष्ट· गोपतरुण्य· मुक्तामणय । धृष्टगाणय· एव मालास्थ वरदाम् । हारेण शास्वदुरसा, स्वीयस्मरशताधिकभासा पूरिताशाप्रदेशेन, शारदाम्बुजदृशा वरभूषाधारिणा कमलेशा[1] कृष्णेन अतिरुचिर. सः रासोत्सव. कृतोऽभूत् । प्रियाभिः सहितानां अमराणां विमानान्येव तत्र वितानानि । तृप्तबन्दिचयसदृश. वि-तानः[2] तत्राभवत् । स च रासमह. स्वल्पमेघरत्वाख्यमर्दलेन सान्द्र·, स्व प्रसूनाना रुचिमद्भि· दलै· सान्द्रश्च । जृम्भमाण-नव-पल्लव-शोभे, शम्बरारि[3] पिनूपत्-लवशोभे अम्बुजे अपिहृदा हिमर्दन अहिमखण्डनेन मरुता तत्र जृम्भितः । मञ्जु सिञ्जदतिभासुरभूषः, कञ्जनाभबहुसुन्दरवेषः, अस लग्न कर–सारस-प श. सश्रुतः रासविलासः जयति ।

पुण्डरीकमुने. मुखस्य मुख्यविकासः खण्डित अरितिमिर उरुतराशः शौण्डमध्वकविवर्ण्यविलास. पाण्डुरङ्गरविः अत्र ललास ।[4] यस्य कृष्णस्य पद जातु ऋग्याद्यैः वेदैरपि साकल्येन असिद्धं तत्पदं गातॄणां कोकिलानां रवै श्रुतिपूर्तौ स्फीतै भृङ्गनिनदैः श्रुतिपूर्तौ[5] इह रासोत्सवे सिद्धैः मृगादोरपि ध्यातम् ।

अस्मिन् रासोत्सवे हस्तिनीनां गोपीनां हास रमाक्र .यः, कृष्णस्य मूर्तय· एव सुरपादपश्रेष्ठाः । सद्युतिस्मितानि च पयोऽमृतधाराः, एता दृशः रासोत्सव. एकैकरमा–कल्पद्रुमर्शाल्लसित क्षीरपयोध्धि धिक्चकार ।

श्रीशोड्डुराजस्य निजसौभगेन रञ्जितस्य रासोत्सवस्य रस भुवि को वा वर्णयेत् । यत् भृङ्गहंस शुककोकिल बे कि मुख्याः[6] अपि तं द्रष्टु प्रहृष्टमनसः परितः समीयु. ।

---

1) कमलाया ईट् ईश. तेन ।
2) वीनां पक्षिणां तान. विस्तार. ।
3) शम्बरासुरस्य अरि. मन्मथः ।
4) रविरपि पुण्डरीकानां कमलानां विकासमातनोति । अरिभूत तिमिरस्य खण्डनेन आशाः (दिश·) प्रकाशयति । कविभिः तस्य विलासाः वर्ण्यन्ते ।
5) श्रुतेः तानप्रदानस्य पूर्ति सम्पूर्तिः यस्मिन् ।
6) विलासानाभिज्ञतिर्यग्योन्युत्पन्ना· अपि ।

यत्ताण्डवे पक्षिमृग अघिपादीन् उद्भूतहर्षाम्बुनयनान् उन्नम्र-रोमणश्च अकार्षीत् स कृष्णः मां ईदृशमत्र[1] कुर्वन् मङ्गलरङ्गे ननर्तु[2] । यं कृष्ण प्रति तर्हि[3] बर्ही ननर्त । नगाः पुष्पं समर्प्य आर्चयन् । मञ्जुरवा मधुकराः स्वैरं जगु. । मृगा साक्षात्प्रैक्षन्त । उत्क्षिप्तोच्चफणा. फणीश्वरगणाः. कम्पेन[4] यं पर्यगु साऽयं श्रीरमण मया रचितया रासक्रीडा-वर्णनाख्यया अर्चया प्रीणातु ।

स. कृष्ण रासोत्सवरभरणलालसमानसानां पुरां असह्य संसार बन्ध मोचयतीति नापूर्वम् । यस्मात् सः रासे व्रजवल्लभानां केश-पाशस्य कुचकञ्चुकस्य, रम्यनीव्याश्च बन्धं विश्लथयते ।[5] यस्मिन् उदयति सति, नाग-केकि-नकुला. फेरुण्ड-सिंह द्विपाः गो-शार्दूल-मृगाः, किरात-विहगाः. स्फुट परस्पर वैरं परित्यज्य मित्रेषु अमित्रेषु कलत्रेषु पुत्रेषु च विरसाः सन्तः, तस्थुः । तद्वृन्दावनरासमण्डलश्री. मम चित्त-स्थितान् कामक्रोधादि षड्रिपून् कृन्ततु । रासक्रीडायां कृष्णांसे आलम्बित पाणिपद्मानां ललनानां ससद. कपोलस्थलीषु ससवतगण्डमण्डल, हसास-नाढ्यै सुत. वशांस्थापितमङ्गल्य ङ्गुलिदलं, विलासपारवश्येन स्रसद् विभूषावलि इन्द्रनीलवत्नील त अमल संसारसार हरिं सेवे । हाराणां आधारे मनोहरे उरसि लसन्नारीकरम्भोरुह, ताराधीशमुख विहारेण सरसोदारस्फुरद्वीक्षण, स्मेरं चारु पराध्यभूषणधरं कारुण्यवारांनिधि धाराधरश्यामलं तं श्रीकृष्ण, इदं कारागारं संसारं विहाय भज । छत्रा-यिताद्रीश्वरे नृसिंहाभमनवत् संशाभिमूलस्य त्रिभवविराजिते विस्तीर्णा-मरशाखिरूपरत्नभवने विभ्राजमान भृत्यैः ब्रह्मभवादिभि परिवृतं,

1) उद्भूतहर्षाम्बुदृशं पुलकिताङ्गं च ।

2) रासोत्सववर्णनेन कृष्णे सञ्जातप्रेमातिशयः कविः स्वाभीष्ट प्रार्थयते ।

3) तदा कृष्णस्य ताण्डवसमये ।

4) कृष्णरासास्वादजन्यकम्पेन ।

5) एकैकाङ्गनानिष्ठग्रन्थत्रयमोचकस्य रासोत्सवस्य स्मरता एकबन्ध-मोक्षणं किमाश्चर्यम् ?

सद्भिर्वन्दिभिः संस्तुतं त्रिलोकगोपालकं नेत्रानन्दकरं अमरं विभुं कृष्णं हे चित्त उपास्व। हे चित्ताख्यक्षितिपाल, त्वं भक्तिरमणीयुक्तः सन् विठ्ठलाङ्गसरसीतोये अनिशं रमस्व। अक्षिमीनाश्रयः नाभि-आवर्तवान्, श्रुतिह्रदयुतः केशौघशैवालवान्, सुभ्रू-सद्वल्लिपङ्क्तिमन्दहसिताख्य उत्तङ्गोर्मि- फेनान्वितः हस्तअङ्घ्रिरूपअब्जवान्।[1] हे हस्ताख्याम्बुज विठ्ठलांघ्रितरणिं मा मुञ्च। हे दृक्कैरव कृष्णस्य श्रीमन्तं मुखचन्द्रं मा मुञ्च। अस्थिरमनश्चोर कृष्णस्यालकाख्यं तमः मा मुञ्च। हे जिह्वादर्दुर, तत्कथासुजलधिं मा मुञ्च। हे हृद्गेह, हरेः वक्षःकवाटं मा मुञ्च। हे श्रुतिपञ्जर प्रतिदिनं शुकस्योदितं हृद्यम् मा मुञ्च।[2] हे भ्रान्तस्वान्त! विनिन्दितैः विष्ठानिपुष्टैः क्रिमिशतैः आवृतं मूत्रामत्रं अमेयपूयविगेयं अबलाकायं त्यज।[3] किन्तु नित्यं निर्मलविग्रहं निजानां वशं नीलोत्पलश्यामलं प्रेष्ठं व्रजवधूतृष्णासमुज्जृम्भकं विठ्ठलं संस्मर।

गोपीकृष्णसंवाद

गोपी– हे हृद्य, नाथ इनः अस्मत्सन्निकटात् क्व गतोऽसि?

कृष्णः– मुग्धे, मृगयां कर्तुम्।

गोपी– सा मृगया प्रभोः तव अन्तरे अद्यैव कथमङ्कुरिता?

कृष्णः– परिलसन्ति कुम्भीन्द्रकुम्भभ्रान्त्वापि तव स्तनतटे लुब्धान् केसरिणः स्पर्धायुतांश्च द्विपान् वेद्धुं अद्यैव मम चित्ते मृगया अङ्कुरिता इतीरयन् सः मुररिपुः मम बुद्धिं दद्यात्।

"हे सखि (मम वराहनृसिंहाख्यरूपद्वयसद्भवात्) साजात्येन वराहाणां सिंहानां च निवहं सन्त्यज्य, सारङ्गान् प्रियायाः तव चक्षुषोः

---

1) यथासरसीतोये मीनावर्तह्रदशैवालादयो वर्तन्ते तथा विठ्ठलाङ्गसरसीतोयेऽपि। भक्तिरहितध्यानस्य अप्रयोजकत्वात् भक्तिरमणीयुक्त इत्युक्तम् कामिनीरहिततया जलक्रीडाया. अपि अप्रोजकत्वात् भक्तीरमणी इति उक्ता।

2) पञ्जरस्य शुकस्य ध्वनिः हृद्या। श्रुतिपञ्जरस्य शुकाचार्योक्तं भागवतं हृद्यम्।

3) स्त्रीशरीरे आसक्तिं मा कुर्वित्यर्थः।

साम्येन विहाय, शशानपि चन्द्रस्य त्वन्मुखसादृश्यगर्वापहान् सन्त्यज्य, शिखण्डिनां व्रजं 'शिखण्डी' इतिनाम्ना, तद्बर्हाणां च त्वत्पुष्पाञ्चित केशहस्ततुल्या त्यक्त्वा हे मृगाक्षि मत्सङ्गप्रतिबन्धके तव दुरिते मृगयां कृत्वा अत्र आगम" इति आलपन् असौ कृष्णः पातु ।

गोप्यः– हे नाथ, अस्मान् विहाय त्वं कस्मादन्यत्र अगमः ?

कृष्ण.– हे मुग्धा ! वृक्षाणां अभ्यन्तरे वर्तिनः चन्द्रमहसः सकाशात् युष्मान् पृथक् अज्ञात्वा, शुकौघानां वचनात् युष्मन्मञ्जुगिरः पृथक्अज्ञात्वा, पिकौघनिनदात् भवत्सुस्वरान् पृथक् अज्ञात्वा, भवन्मार्गणं कर्तुं अन्यत्र गतोऽहं इति उदार्य ता. गोप्यः शमयन् स. कृष्ण. मम सौख्यं दद्यात् ।

दन्तक्षतेन स्फुरितगण्डरुचः कृष्णकराब्जेन वद्धमध्याः कुचकुम्भ-पार्श्वे सञ्जातमञ्जुलनखव्रणरञ्जिताः ताः इन्दुमुख्यः स्वकीयस्य अहंकाररूपसान्द्रापराधस्य फलं आपुरिव ।[1] गन्धलुब्धैः परभृत-मधु-पाद्यैः परिसेवितः अशोक-अरविन्द-चूत-मल्लिका-नीलोत्पलानां काम-बाणानां सदृशैः कर-पाद-अधर हास-अपाङ्गैःशोभितः, सुललितवन मालाख्यपुष्पधनुर्धरः दृप्तयोषिद्भिः सहितः स कृष्णः वररूपी स्मर इव विरेजे ।

नालीकागार[2] –मार–त्रिपुरहरमुखैः देवैः अम्बरस्थैः गीयमाना, वनमालायाः, अलङ्काराणां च कान्त्या विघटितहृदयग्रन्थिः[3] इन्दीव-रामा कालिन्दीतीरसंस्था, करधृतमुरली, कामिनीनां केल्यां लोला, लीलापाङ्गावलोका प्रेयसी सा कृष्णाख्या देवता मम हृदये विलसतु । श्रीकृष्णः नीलाम्भोदोपमः । मेघस्तनितवत् मञ्जु गायति । स्वागमनेन

---

1) अपराधिनः दंशनबन्धनताडनादिभिः दण्डयन्ते किल ।

2) नालीकं पद्मं आगारं गृहं यस्य स. चतुर्मुखः ।

3) विमोचितकञ्चुकग्रन्थिः । मनोहरपुरुषदर्शने कञ्चुकग्रन्थिर्विभिद्यते इति प्रसिद्धिः । 'भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः' इत्युक्तेः योगिनां हृदयस्थाविद्याग्रन्थिरपि मोचिता ।

स्रवन्त्या कलिन्द्याः पुष्टिहेतु । तापपरिहारित्वेन नीरवद्विद्यमान स भ्रामयादिमोर्ज वर्षति । निजतनुमहसा अर्कोङ्कुराजी आच्छादयति । बालानां गोपीनां नेत्रातसवश्रीः अपौ । सुन्दराणां हृदयाख्यव्योमधामा वरवमनतटित् सन्द्रमालयेन्द्रचापः असौ मेघोपमः कृष्णः जयति । यमुनाजघननिवास कमनीयं कामिनीभिः कलित विमृशतां योगीशाना तसौ दूर कृष्णाख्यं ब्रह्म मदीय अघ शमयतु ।

जलक्रीडावर्णनम् :

गन्धलोभेन दूरमनुगमनात् श्रान्तैः अलिभिः परिवृत, अम्भसि गाहमानः कान्ताख्यकरिणीभिः सहितः कनकोज्वलाङ्गः प्रान्तस्थितानां अब्जानां चयचुम्बिकरः मुकुन्दाख्यदन्ती ममान्तरस्थाः मोहाख्यमोचाः[1] निकृन्ततु । जलक्रीडायां अभिगति जलदानं प्रमण सश्लेषः इत्येतेषां वेगात् स्फटिककुम्भागाः दृश्यमानारुदेशाः कचित् विगलितमाल्याः ताः गोप्यः क्षरितैः जलसंयुक्तैः कुङ्कुमाद्यङ्गरागैः यमुनासरितमपि[2] सरागा[3] चक्रु, पुरुषास्तु आसां गोपीनां किम् ? यमुनानदी अपि गोपी इव अलक्ष्यत । सत्कैरव तस्या आस्यम् । उत्पलमेव लोलनेत्रम् । मधुपेन अङ्कितः पद्मकोशः तस्याः व्यक्तस्तनौ । आवर्त एव नाभिः ऊर्मयः तस्याः हस्ताः लक्ष्यजघना सुफेनहासा सा नदी गोपीवास्ति ।

अधिजलं गढ आलिङ्गतवल्लभां अत एव निःशब्दभूषावलीं अब्जास्यां गोपी अविमृश्य उपगता[4] आलिङ्गितवल्लभायाः गोप्याः सत्कारश्रवणेन क्रुद्धा सा गोपी शशिमुखी, तस्याः भ्रूरूपदृढचापे लग्ननयन प्रान्ताख्य इषुपातात्पूर्वमेव रूपान्तरवता कृष्णेन सामोक्त्या समालिङ्गिता । करधृतानां दृतीनां तोयैः मुकुन्दं स्नापयित्वा तं आलिङ्ग्य कुच

1) कदली रम्भा कदलीमोचेति हलः ।

2) रसअनभिज्ञामपि ।

3) सकामामितिध्वनिः ।

4) कण्ठपर्यन्त जलवर्तित्वात् तस्या केवलं मुखं कमलवत् अदृश्यत । कमलमिति भ्रान्त्या कृष्णेन सह विलासं कर्तुं आगता ।

तटगतगन्धेनलिप्तं कृत्वा यतियं गयां गति साधयन्त्य इव ता अबला. शिरसि निहितमाल्यैः अर्च्यं एनं कृष्णं आनर्चुः । एषः देवः कृष्णः रम्यललनाना करपद्मपत्रैः स्नापितोऽपि भृग्यानां अमराणां आवलिना समर्पित पुष्प पुञ्जे विस्तीर्णं पुष्परेणुनिकर आत्मनः अङ्गं दधन् हस्तीश्वरप्रकृति आर्जयत् ।[1]

द्विरेफशावेन अङ्कितशोभितवक्त्रं, सुस्वरराजहंसै कृतक्षतं, मनोरम सारसकोशं एका बाला स्वस्याः घनस्तनस्पर्धि दृष्ट्वा चकर्त । माद्यद्द्विरेफै कृतगोसजातं युक्त, पद्मासनस्येष्ट पवनेन जुष्ट सुगन्धि पद्मं मुकुन्दस्योग्य सपत्न्याः लक्ष्म्याः सद्माभिशक्य इव कापि म्यलुनत् । काचित् श्रीपतेः अघर्मीत्कृतिकाले मां इतरा गोपिका ईक्षयति इति कोपेन तप्तहृदया इव गोपी एत्य सराग कोकनदं जहार । दृप्तभृङ्गा द्येन आङ्गेन विलोल सत्सरोजं काचित् सः हरिः एतत्पद्मं मदीयं वक्त्रमिति सीत्करिष्यति इति भीतियुतेव अलुनात् । समीपगतात् सखी- जनात् जातलज्जा सती काचित् आकण्ट अम्भसि गतस्य हरेः मनोज्ञं आस्यं 'एतत् विकसन् अधीरभृङ्गयुक्तं[2] आताम्रकेसर[3] नीलोत्पल' इति प्रवदन्तो अजिघ्रत् ।

दूत्यादि प्रेषणम् :

गोपीप्रेषिता दूती कृष्णं प्रति कथयति । "आर्य, प्रभो, कृष्ण, तद्भवनं आयाहि । त्वया विरहितं गृहं सन्त्यज्य सत्वरा सा तव नायिका त्वच्चरणे चित्तं निधाय विवशा सती चित्रार्पिता इव गृहद्वारि त्वद गमन दर्शनोत्सुका आस्ते । नव योगहीनां तनुमिव[4] पुनः तद्गृहं न विविक्षति । हे ईश कृष्ण तवानागमने तस्याः तनुरूपशाखिना तद्भवनं काननमेवस्यात् ।"

---

1) गजः स्नात्वापि रेणुदिग्धः भवति एवं गोपीभिः स्नापितोऽपि पुष्प वृष्ट्या पुष्पपरागदिग्धाङ्गोऽभवत् देवः ।

2) कटाक्षरूपकमेतत्

3) बिम्बोष्ठरूपकमिदम् ।

4) अनेन कृष्णानागमने तनुत्यागः निरणायि ।

"हे ईश, असौ तव प्रेयसी गृह प्रविशन्ती निर्यान्ती च त्वदागमविषयकं मम प्रेमालापं अपि प्रत्याक्षिपन्ती, क्वापिहस्ते आनन निवेश्य उरुशुचा श्वसन्ती तव वर्त्म पश्यन्ती साश्रुनयना सती महुः मां याचमाना क्वापि मोह वहन्ती, कस्य वा पश्यतः प्राणिनः मनः सदयं न कुर्यात् ?" "हे मारतात, चारुराज, इन कृष्ण इदानी हि सायम् । इयं गोपी सा व्याप्ता रमा न हि । एणाक्षी तव गोपी जरारुचा[1] अदेववत्[2] क्षीणा ।" इत्थ निगद्य दूत्यः नृत्यन्मयूर-शुक-कोकिल-मत्तभृङ्ग-समूहेन आदृतेन उपवनेन वासितं, अङ्गनाया. वितानमणिशोभिगृहं निगमैरपि अकलितं कृष्णं निशासु नयन्ति ।

सा गोपी प्रियेकृष्णे अभ्यागते सति मञ्जुकलशप्रख्ययोः स्तनयोः स्थायिना नेत्रानन्दजलेन हिमवारिणा इव पाद्य अर्घ्यं च प्रादात् ।[3] प्रसूनस्रुतैः मधुभिः स्नान प्रादात् । कृष्ण आलिङ्गय अङ्गकलाप-रम्यतिलकं श्रीखण्डलपान् प्रादात् । लालईक्षाख्यां उत्पलमालां औष्टज सुधां च प्रादात् ।[4] गोप्यां कान्ताधरचुम्बनासक्तायां तस्य आननद्युतिः निवृत्तासती तस्याः कटाक्ष-गण्ड बिम्बोष्ठ रम्यरुचिभिः मिलिता । एतन्मिश्रिता तस्याः स्मितश्रीः इन्दीवर-अम्बुरुह-कोकनदैः सुगन्धि पीयमान सान्द्र मधु अनुकुरुते । विष्वग्व्यापिमणिप्रशाभिध-पयःसिन्धौ स्फुरन्मण्टपप्रख्ये वेश्मनि, रत्नमयभित्तेः श्रीपतिमौलेश्च रत्नानां महसा पार्श्वतो गन्तुमसमर्थतया उत्सर्पिण्या स्वरत्नश्रिया पुष्टोन्नम्रफणत्विषां मुषि भोगिकल्पकशिपौ व्रजस्त्रीजनैः साकं लसन् असौ विठ्ठलः तुष्टोऽस्तु । काचन गोपी रत्युत्सुके हृदये बलात् धीरतामालम्ब्य कोपेनेव नेत्रयुगलं निमील्य तल्पे शयाना सती किञ्चित्कालं कान्तं कृष्णं निद्रितमाकलय्य

---

1) जरयाप्राप्ताअरुक्अकान्तिस्तया । जरा एव रुक् रोगः तया इति वा ।

2) सामान्यमनुष्यवत् ।

3) पादयो. दीयनाम हस्तयोः दीयमानं जलम् । अनेन कृष्णागमने गोप्या कृष्णपादयोः वन्दनं तत्करयोः गोपीस्तनयोः स्थापनं च द्योत्यते ।

4 ) अनेन नैवेद्यान्तोपचाराः कथिताः ।

शनकै त आलिङ्गय बिम्बधर सीत्कुर्वन्ती, अथ कृष्णेन वीक्षिताऽपि तत्सुखेन विविशा सा मान[1] न सस्मार ।

**गोपीकृष्ण संवाद :**

गोपी– हे मुकुन्द, कुत्र गन्तुं समुद्यतोऽसि ?[2]

कृष्णः– हे तरुणि त्वद्धाम गन्तुमुद्यतोऽस्मि ।[3]

गोपी– मद्धाम्नः पद्धतिः किं तत्रास्ति ?[4]

कृष्णः– हे मानिनि, तव स्वच्छोर्जितकान्त्या आक्रान्तं त्वद्गृह द्वारं अलक्षयन् तस्यतेजसः अन्तरे कृशं इद तव गात्र च अलक्षयन् गन्तास्मि इति अभिधाय तन्मृदुकरं गृह्णन् मां गृह्ण तु ।

गोपीः– ईश कृष्ण यदि त्वं मया सह रिरसया महित मद्धाम आयासि चेत् अध्वनि स्निग्धां मां अवलोक्य सद्यः भीतपदवी कस्मादल भीष्टाः ?

कृष्णः– हे पद्माक्षि, तव स्तनाख्यजृम्भिकुम्भयुगलं उद्वीक्ष्य पृष्ठतः कुम्भीश्वर आगतः इति आशङ्कया भीतपदवी गतोऽस्मि इति निगद्य सुस्मितमुखी तां चुम्बन् सः कृष्णः जृम्भते ।

गोपी– ईश, अन्ययाकृतेन चुम्बनेन जातं चिह्नं अधुना तव बिम्बाधरे दृश्यते । तत् मां प्रियगिरा किं कारणं रञ्जयसि ? सैवाबला धन्याहि यया त्व चुम्बितः ।

कृष्णः– हे सखि वरवर्णिनि मन्यूद्रिक्तहृदा दष्टोष्ठतया भवत्या शून्यां सभां मुहुः पश्यतः मे तदधरव्रजं अभूत् इति तस्याः कोपं शमयन् असौ कृष्णः मन्मानसे स्यात् ।

गोपललनावृन्दं वृन्दारकैःप्रोषितैः मन्दारादीनां लसतां प्रसूनानां निचयैः प्रियस्य कृष्णस्य वर्त्म सन्दृश्य वृन्दावनस्य निकुञ्जमन्दिरगतं, मन्दानिलैर्वीजितं, चन्द्रस्य अमन्दकरेण सेवितपदं कन्दर्पंत तं निशि शनैः

1) प्रणयकोपं
2) स्वात्मानं वञ्चयित्वा अन्यत्र गच्छन्तं कृष्णं प्रति उक्तिरियम् ।
3) स्वकृतवञ्चनामाच्छादयतः कृष्णस्य प्रत्युक्तिरियम् ।
4) मद्गृहमतिक्रम्य दूरतः ।

पद्यने । मेघश्यामकृष्णदर्शनेन नृत्यत्केकिनि, चित्रपुष्पयुत तिलकवृक्षाख्य-रत्नस्फुरत्तोरणैः विष्वक्शोभिनि, पल्लवाख्यविलसत्तल्पे विस्तार्णैः औषधिभि. प्रदीपत्विषि, प्रसूनविलसत्पत्रै वितानप्रभ, मत्तालिव्रजगायके कुञ्जे निजा रञ्जयन् हरिरभात् ।[1] सौन्दर्यनद्या स्नातः परिहृतवसन, गोरिकानां आलेपनश्रीयुक्तः[2] वक्षोजाख्याब्जासनस्थः वने कृतवसति प्रेयस्या दानुं हारमालाकराग्र केशपाशाख्यकाशान् बिभ्रत्, अधरज न्यपयोमात्रवृत्तिः विनिद्रः प्रेष्ठ. असौ विठ्ठलः मुनिगणं जयति । अस्य मुनिमार्गवर्तिन. कृष्णस्य जारवार्ता कुतः ?[3] सौन्दर्यसिन्धुं. सुस्मितमुख तुङ्गात्मीयमनोरमस्तनतटे नखैः सन्दर्शिताङ्क कृष्ण पुलकितै. गलदु भूषणै. स्वाङ्गै. गाढं परिरम्य, कृष्णस्य सरसाधर चुम्बन्त्यः ताः गोप्य् मन्दानिलै. मञ्जुलं तद्वृन्दावन । दृष्ट्वा ननन्दुः कान्ताकदम्ब-कुच कुञ्जर कुम्भमङ्गी, सन्तापहारिणा नखमण्डलेन अत्र मण्डितः स्वगण्डानुषक्त बल्लवीनां विलसन्मुखचन्द्रचुम्बी कृष्णाख्य विचित्रमिह कुञ्जेषु सञ्चरति । यत्र वृन्दावने गोवर्धनाचलसहित अखिल स्थल कृष्णस्य अङ्घ्रयो. ध्वजादिलक्ष्मभि लक्ष्य, यत्र सस्त्राकाः पाक्षागः हरिण्यः, हर्यंशाः वृक्षाः इत्येवमादय सर्वेऽपि मुनयः एव । यत्र पाथः (उदक) सुरसिन्धु-सिन्दुभ्यां महित यस्मिन्वृन्दावने श्रुत्यन्त-अन्तरित महः कृष्णाख्य ब्रजस्त्रीवश तिष्ठति तत् उत्तमं वृन्दावन अस्माकं मुदे स्यात् । यस्य कुञ्जाः मुरवैरिणा सङ्गतानां वधूना विक्रीडनैः वासिताः यच्च वृन्दावन स्वस्मिन्नुञ्जातानां सुरद्रुमाणां समूहस्य महसा विद्योतिताशा मुखं, यच्चवृन्दावन चन्द्रईश-सुरेश मुख्यैः विबुधैः सदा संसेव्यमान तद् वृन्दावनं प्रमत्ते मम चित्ते सततं आविरस्तु ।

गृहगता गोपी– कस्त्वम् ?

---

1) महाराजं कृष्णं कुञ्जेऽपि नृत्तगीतादिराजवैभव नामुञ्चत् ।

2) गाढालिङ्गनवशात् तासां अनुलेप. एनं प्राप्नोति ।

3) मुनिरपि नद्या स्नातः दिगम्बर गोपीचन्दनलेपवान्. पद्मासनस्थः अरण्यवासी जपमालाधारी, दर्भवान्, अब्भक्षः विनिद्रः । स्त्रीभिः सहितोऽपि कृष्णः मुनिवृत्ति इति जयति मुनिगणमित्युक्तम् ।

कृष्णः– कश्चन निर्जरोऽ[1] हम्

गोपी– इह ते स्वर्गः क्व वर्तते ?

कृष्णः– तत् त्वद्गृहमेव ।

गोपी– पीयूषं क्व ?

कृष्णः– तवाधरेऽस्ति सुभगे ।

गोपी– क्वास्ते तवानिद्रता

कृष्णः– सखि त्वत्प्रेम्णां चिन्तया ममानिद्रता ।

गोपी– अनिमिषता कुत्र ?

कृष्णः– प्रिये पश्यतः त्वद्रूप ।

इति प्रियगिरा सः चक्री वल्लबी निजां चक्रे । गोपी कापि वैश्यत्वत् श्रीकृष्णस्य प्रीतेर्लाभमवेक्ष्य चित्तमपि तस्मै ददौ । कृष्णः तां वैश्योत्पत्तिस्थाने स्वाङ्केन्यधात् । रतिसङ्गरस्थहृदयां तां रम्यैः भुजैः आलिलिङ्ग । पूर्वं विरहोच्छ्वासादिना औष्ण्यतया तिलकाभावेन सूर्यसदृश तस्या मुखं सूर्योत्पत्तिकारणनेत्रविषय कृत्वा बलङ्किनः चन्द्रस्य उत्पत्तिस्थानाय स्वस्य मनसे संरोचयन् इव स कृष्णः कस्तूरा तिलकेन तन्मुखं भूषयति । स स्यान्मुदे विठ्ठलः ।

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि
प्रेम्णा चिन्तयतां विचित्र विमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते ।
सञ्जातः सुरमण्डलीषु नवमः सर्गो मुदा सत्कृतः ।।

---

1) देवहः

## दशमः सर्गः

स. कृष्णः अनेन प्रकारेण रात्रौ विविधान् विलासान् कृत्वा निशान्ते गोपीः विससर्ज । विधोः प्रीत्यर्थं तदन्वये जातः कृष्णः स्वेन कृतरासलीलां सूर्यं न सन्दर्शयति स्म नूनम् ।

एकदा दुर्गादिने दुर्गापूजायामासक्त उपवासव्रतधर नन्दगोप निशि बुभुक्षितचित्तवृत्तिः सर्पः अग्रसीत् किल । सकलेश्वर कृष्ण विसृज्य अन्यदेव प्रत्यर्हणे अभिरत तं नन्दगोपं सर्पः अग्रसीत् इत्यहं ऊहयामि । सुदर्शननामा विद्याधरः शापेण सर्पशरीरं प्राप्त, अब्जनेत्रः कृष्ण नन्दगोप दंशन्तं तं सर्पं स्वस्य (कृष्णस्य) दर्शनेन शुष्टु दर्शन प्राप्त सुदर्शननामानं, आत्मनः (कृष्णस्य) विद्याधराणां अन्वयसम्भूत अभूमुचत् । सः सर्पशरीरात् मोचित गन्धर्वोऽपि तत्पादेन पूनतः उत्तम पुरुषाङ्घ्रिप्रीत्या इव तस्य विष्णो पदमेव (गगनं) जगाम ।

सः हरि स्वात्मनि विद्यमानं असह्यानां नक्तञ्चराणां नाशकत्व प्रकाशयन् सन् निगूढतया तत्र क्षपाया आगत शङ्खचूडाख्य दितिज शार्दूलमिव ममर्द । सः तस्यशंखचूडस्य वधात् अवाप्त शिरोमणिं बल रामाय दत्वा स्वयं मनोज्ञकान्तामणिभिः समेत चन्द्रचयातिचारु यशो मणिं बुभुजे ।

### अरिष्टासुरवध :

धूलीपालिभिः विष्णोः पदं अम्बरं मलिनयन्, कृष्णसमानकान्तीन् तोयदान् लाङ्गूलेन विदारयन्, कृष्णावतारस्य निमित्तमिति देवेन्द्र ककुदाख्यपर्वतेन, पृथ्वीं च खरपुटैः क्लेशयन् अजितं कृष्णं स्वविषाण लक्ष्यं कुर्वन् वृषभरूपधारी अरिष्टासुरः अभ्यायात् । उग्रः सः अरिष्टासुरः स्वविषाणयुग्मं अग्रे निधाय अच्युतं प्रतिअगमत्– तच्छृङ्गयुग्मं दोष्णा उत्पाटयतः मुरारेः स्वशिरोभारजिहीर्षया सहायं कुर्वन्निव । यदुपतिमृदुहस्तेन उद्धृतं अरिष्टस्य श्रृङ्गयुग्मं तं अरिष्ट असुर त क्षणेन व्यसुमकार्षीत् । तद्युक्तम् । शिरसिधृतः स्वीयोऽपि अन्तकाले सति शत्रो

करवशमुपयात.[1] शत्रुतामेति। यदीय नाम स्मरतां मुनीनां अरिष्टं आत्यन्तिक नाश एति तदेकनाथं[2] जैत्र व्रजं एत्य अरिष्टस्य[3] पुष्टिः न हि दृष्टपूर्वा।

कृष्णसपत्नानां कसचाणूरादीना अङ्गनाः अरिष्टासुरनाशेन कृष्णस्य प्रथमानवीर्यतरणि दृष्ट्वा चिन्ताक्रान्तमनोरथा.[4] भाविनः स्वीयपयोधरद्वयशुष्कत्वस्य सप्राप्तये हृद्गस्य उदग्रपयसः वियोगकरणे उद्युक्ता इव भृश आर्ताः स्वनयनद्वारा[5] अश्रुधारा. दधु.।

"आजौ मुकुन्द प्रतियास्यतः मम श्वः[6] जीविताशा न विद्यते ननु" इति निश्चित्य इव केशी दैत्य अश्वरूपी सन् नन्दव्रज जवेन जगाम। विश्वमूर्ति[7] अग्र्यकीर्ति तं कृष्णं ग्रसिष्णुः सः केशी विस्तृतास्य सन् तं प्रति अभ्यागमत् किल। यदोर्वंशमणिश्च हरिः स्व पाणि तन्मुखे प्रवेशयन् तस्य विस्तृतास्यतया अभ्यागमनं ईप्सितमेव मेने। सः मुरारिः तदीयस्य हृदम्बिरस्य मध्ये संस्थितं अमुं बहिष्कर्तुं ईहमानः इव स्वकीय करं केशिदैत्यस्य मुखे निवेशयामास। असौ कृष्णहस्तः जरा इव, तस्य केशिनः धैर्यं जरयन् शरीरबलं च शमयन्, अङ्गं मुहु कम्पयन्, चक्षुरादक्षेभ्यो अपटुतां दिशन् दृढतरान् दन्तान् बलात् पाटयन् तच्छ्वासं स्खलयन्, बहुशः तद्यौवनं दूरयन् केशिन. द्विषः अन्तकपुरातिथ्यं सूचयन् तद्वदनान्तप्रदेशे ववृधे। खलाग्रगण्यः स केशी कृष्णस्य दोर्दण्ड वरस्य अभिवृद्ध्या कायं विससर्ज। तथाहि। परस्य जातान् करोदयान्[8] वीक्ष्य असूयाभरिताः पुरुषाः असून् अपि त्यजन्ति।

(1) शत्रुद्रव्यवशमुपयात।
(2) सः कृष्णः एव एको नाथः यस्य तत् व्रजं
(3) अशुभस्य, अरिष्टनामकदैत्यस्य
(4) कंसादिनाशाद् अस्मन्मनोरथा न पूर्यन्ते इति चिन्ता
(5) अनिमिषदृष्ट्या सूर्यदर्शने अस्रोदयः यथाभवति तथा सपत्नाङ्गनानां कृष्णस्य शौर्यतरणिदर्शनेन अश्रुधारा सञ्जाता.।
(6) श्वः न विद्यते इति अश्व
(7) विश्वस्य स्वोदरे स्थापितत्वात् विश्वमूर्तिः
(8) प्राप्तद्रव्याभिवृद्धि

केशिवधानन्तर सुरर्षिनारदः वाक्कौशलेन विपक्षं निन्दन् स्वपक्ष स्तुवश्च कंस अभ्येत्य इत्थं शशस–अङ्ग, कंस सोऽयं भोजराजः उग्रसेनः न तव पिता। त्व मायामयात् उग्रसेनवेषधरात् कपटिनः जारात् जातोऽसि। कस, भुवि ये तवानुगाः ते सर्वे दानवाः त्वं चासुरसञ्चयेषु अग्रगण्यः। असौ वसुदेवसूनुः सुराणां ईश्वरः। तत्पक्षगताश्च समस्ताः सुराः। सः कृष्ण. वसुदेवपत्न्या देवक्या वसुदेवात् गर्भे धृतः। अस्मिन् तव मन्दिरे प्रसूतः। त्वदीयभीत्या आनकदुन्दुभि. तं कृष्णं तव आलयात् मित्रस्य नन्दगोपस्यालयं निनाय। अतः नन्दगोपितत्वेन नन्दसूनुरिति ख्यात.।– इति नारदेन ईरिते सति शौरिणः वसुदेवस्य वधोद्यतं तं कसं स तु देवयोगी बुद्ध्या उपायेन निषिध्य, वसुदेवस्य शृङ्खलाबन्धं तु तदा मुकुन्दस्य मत[1] विजानन् न वारयामास।

नारदर्षिः तं कंस एवं वसुदेवस्य शृखलाबन्धनेन रचितापराधं विधाय कृष्णस्य अन्तिक आजगाम। यथापराध खलानां दण्डकर्तुः कृष्णस्य पुरतः कंसं कृतापराधमूचे–पुरारि प्रतिमः नारद.। अवाप्तसकल कामस्य कृष्णस्य किञ्चिदपि कर्तव्य नास्तीति असौ नारदः 'मदीयं वचनं ऋत विधातुमपि वा इह कार्याणि करिष्यति[2]' इति हेतोः भविष्यत् सकल मथुरागमन कसवधादिक बभाषे।

इतीरयित्वा अब्जजनेः सुते नारदे गते, अरिणा कंसेन प्रहितः श्वफल्कजः अक्रूरः तत्र नन्दव्रजे अदृश्यत। स च, मृगाविपेन ग्रस्तः दिष्टया विमुक्त. वीक्षितस्वर्गत्वात् हृष्यन् मृगशाव इव विभ्रमवानासीत्। स्वभक्तेभ्य. स्वस्य सर्वेप्सितदोहदक्षतां सन्दर्शयितुं समुद्यतं निजं प्रभुं व्रजे गोदोहनकर्मणि स्थितं नीरदनीलविग्रहं कृष्णं सः अक्रूरः ददर्श। सः अक्रूर. आदिपूरुषं नारायणं तं ननाम। तद्दर्शनाख्योत्सवेन सञ्जात सम्भ्रमः सन् ननर्त। नानादुरितौघं अर्दयन् ननाद। नन्दस्य तपःफलोदयं ननन्द। एणाङ्कशुचिस्मिताननः अच्युतः सशङ्कं प्रियं तं अक्रूरं तदा-

(1) कंसं सापराधं विधाय हनिष्यतः कृष्णस्य

(2) सत्यं विधातुं निजभृत्यभाषितं इतिस्मृतेः।

श्रितं अनादिसिद्धं भवरूपबन्धनं अञ्जसा विश्लथयन् इव दृढं आलिलिङ्गे ।[1]

अक्रूराणां[2] जनानां प्रियः गीर्वाणानां गी-र्वाणगणस्य अतिदूरः रक्षो-भर क्षोभकृत् श्रीकृष्णः हीनं महीन[3] कंस मथितु रव निनीषु अक्रूरं इत्थं अवोचत् "अक्रूर, तव क्षेमः किम् ? अस्माकं पिता किं कुशली ? स्वाध्याय-तीर्थप्लुति– स्वर्ग्याराधनमुख्या शोभनकृति. विघ्नोज्झिता वर्तते किम् ? संसारविमुक्तये प्रयतसे किम् ? कंसस्य का वा स्पृहा ? स त्वं वेत्सि अखिलं । यद् अद्य मया कार्यं तच्च ज्ञापय ।"

अक्रूरः– हे अनन्त प्रभो भवान् मम हृत्सरसिजे यावद् वर्तते तावत् क्षेमः । स्वीयानां क्लेशवनस्य अनले त्वयि सति तव पित्रोः क्लेशः क्व ? किन्तु त्वत्पितृतापवादजनित तयोः कंसकृतं शृङ्खला बन्धनं चिन्तासन्ततिहेतुरेव[4] तयोः न सन्तापकारि । हे कृष्णय स्मात् तव पादरजः जुष्ट[5] तस्मात् तीर्थं सेवितमेव । येन अहं तव वपुः आलिङ्गितवान् तेन सर्वे सुराः सत्कृता.[6] । यत् तव दर्शनं लब्धं पुण्यक्रिया च चीर्णा[7] । यत् ते कल्याण वचनं श्रुतं च तत् वेद. परिचितः[8] भवत्सामीप्यभाज[9] मम भवोऽपि नास्ति । हे विष्णो किं बहुनोदितेन ?

(1) पूर्वकृत रज्ज्वादिबन्धनस्य ततोऽपि दृढतरबन्धान्तरे सति विश्लथनं भवति खलु ।

(2) शान्तानां

(3) मह्याः इनः भूपतिः

(4) तव स्मरणहेतुरेव ।

(5) श्रीकृष्णपादधूल्यां सकलतीर्थसन्निधानात्

(6) सर्वदेवाश्रितत्वद्‌आलिङ्गते सति देवतालिङ्गनस्यापि कृतत्वात्

(7) कर्मणा ज्ञानमाप्नोति इति श्रुतेः पुण्याभावे तवदर्शनासम्भवात्

(8) त्वद्वचनस्य सकलवेदोपबृंहितत्वात् ।

(9) सामीप्यादीनां मोक्षरूपत्वात् । किंसंसारविमुक्तये प्रयतसे इत्यस्यो-त्तरम्

भवद्दर्शनात् विश्वं विदित[1] कंसेन संप्रेषितः अहं यत् तव सुन्दरंवपुः अद्राक्षं, शत्रुः भवोऽपि मम मित्रमभूत् । सर्वज्ञचूडामणे ते अयं प्रश्नः नराणां विडम्बनाय । [2]ईश, मम प्रत्युक्तिश्च ईदृशी । सम्प्रति कंसः कार्मुकोत्सवस्य कथाव्याजेन तव विप्रिय[3] कर्तुं वाञ्छति । तेन मतुलेन क्रियमाणं धनुर्महं सार्थं[4] विधातुं तत्र मधुरायां गत्वा सबल शत्रुं धुनोतु । पुनस्तद्वधानन्तरं समाधिप्रियः भवान् स्फुरदभ्र चापोत्सव आरचय्य भजतां तत्रत्यस्त्रीपुरुषाणां आधिं धुनोतु । हे भवोत्तारक कृष्ण भवता मधु-राकेश-महसा मह-साधिका सा मधुरा स्वैः सह सहसा आप्या ।'' ततः सः कृष्णः सतत स्वध्यानेन शुद्धैः वृद्धजनैः आश्रितां मधुरां पुरीं स्वप्रवेशेन मधुरां कर्तुं गमनाय उपचक्रमे ।

हरिं मधुपुरीं यान्तं विलोक्य व्रजयोषित तं विनिवर्तयितुं धिया विविधालापैः विलेपुः । ''नवाम्बुदनीलमूर्ते कृष्ण तव रम्याधरोष्ठसुधया रचितात्मवृत्तीः अस्मान् त्यक्तुं नार्हसि हे अङ्ग त्वत्सङ्गमस्य भङ्ग करणे उद्यत पाप[5] तवलोचनान्तो हि क्षपयितुं शक्नोति । कृष्ण-मधुरां यियासुं त्वां समालोक्य नः प्राणोऽपि देहात् यियासति । युवयोः हरि वाय्वोः अविनाभावं अक्षैरीक्षामहेऽधुना । किमु दुरितमस्माभिरकारि ? विवेकहीनः विधि कसेन प्रकटिते कार्मुकसम्भ्रमे अस्मदीयं कोमलकलेवर आदौ शराणां लक्ष्यं अकृत । दयया अतिदूर, हे विधे तव वचसा अतितृप्ता यदूद्वहस्य आलिङ्गने लुब्धचित्ताः अस्मान् तदीक्षणेन अपि विहीनाः दीनाः कथं करोषि ? अहो ! [6] अक्रूरः इति विरुद्धनामधेयः [7]

(1) येनाश्रुतं श्रुतं भवतीति श्रुते

(2) नृविडम्बनाय न अज्ञानेन । प्रत्युक्तिश्च न तदज्ञानमाशंक्य ।

(3) विप्रिय विगतप्रियं विशेषप्रियं च

(4) सार्थं शत्रु हननरूप अर्थसहितं । कंसशत्रुरिति आपततोऽर्थः । शत्रुभूतकंसमिति आन्तरोप्यर्थः.

(5) गोपीना दुरितं, पापिनं कंसं वा ।

(6) अक्रूरे चतुर्मुखावेशः इति कृत्वा तत्कृतं विधिकृतं इति एवमाक्रोशः

(7) परमप्रियस्य कृष्णस्य वियोगकरणे क्रूरोऽपि ।

अयमपि च कंसदूतः कामिनीनां अस्माकं विलाप उपेक्ष्य प्रियसरस विलासं अग्रयवेष कमनीयं चारुहास कमलदृश कृष्णं नयति । भृत्यः अयमक्रूर. किं करोतु परन्तु सः कसः सतां प्रत्यर्थिभूतः । तद्धनुरुत्सवः निहतोऽस्तु । धनुश्च भग्न भूयात् । यः अस्मत्प्राणसम स्मेरानन श्रीपतिं वियोजयति हा ! अतिमद त कस अस्मदीयः विभु. देव. प्राणेन वियोजयतु । हे मुरारे इतः गोष्ठात् यदि राजधानी मधुरां जिगमिषसि, तर्हि श्रुतिततिजित याहि ते तत्र शुभा श्रीरस्तु । हे सौम्य सुखद तदुपसर्गं[1] शीघ्रं सन्धेहि । अघटितघटक नो-चेत् अस्माक तवैव उप (समीपं) सर्गं घटय ।[2] प्रियं कृष्णं निनीषोः यस्य अक्रूरस्य कांक्षा निजानां सौख्यदाता धाता पिपर्ति । गर्भीकृतपद्मजन्म।[3] स एष अक्रूरः श्रीशपादाम्बुजन्म जिघृक्षति ।"– इति विरहज.भीत्या वेपमानाः कृशाङ्गीः गलितवलयहाराः चित्रलेख्यानुसाराः. गोपीः अमृतकल्पैः प्रेमवाक्यैः प्रीणयन् मुरारिः ताः असकृत् सकरुण वीक्षमाणः मधुरां प्रति प्रतस्थे ।

पादस्पर्शः, करग्रहः, प्रियतमस्य अङ्गानां आश्लेषः केशग्रहः परस्परं प्रेक्षा, अधःकरणं, उपरिस्थितिः मिथोमुष्ठिः एतदादिभिः विलासैः जुष्टे सुरते, गोपीनां कुचकुम्भमर्दनकृता येन कृष्णेन मल्लेन्द्रविद्या[4] ईभार्दनवैखरी च अर्जिता सः प्रभुःकृष्णः ताः[5] गोपीः त्यक्तुं कथं ईष्टे ?[6] सः शौरिः बल्लवानां प्रणयाख्यदाम्ना निबध्यमानोऽपि रिपून् जिघांसुः सन् मधुरां जगाम । तथाहि न विजेतुकामः निवार्यमाणोऽपि निवर्तते । रथेन मधुरां प्रति दूरे व्रजन्तं त रमणं कृष्णं व्रज-

(1) याहि इत्यस्य सुखदं उपसर्गं आ इति उपसर्गम् । आयाहीति भवति ।

(2) कृष्णानागमने स्वासां मरणं सूच्यते ।

(3) ब्रह्मणाऽविष्टः अक्रूरः (4) पादस्पर्शः परस्पयं हस्तग्रहणादीनां मल्लविद्यायां साम्यात् ।

(5) विद्याद्वये गुरुस्थानीयाः

(6) स्वकृतविलासपात्रीभूतत्वात् सदा दयास्ति ।

स्त्रियः परितः, दृगश्वभाजा दृढभक्तिदाम्ना बुद्धिरूपयन्त्रा सहितेन मनो रथेन अनुजग्मु.।[1]

ईशं नन्दकिशोरं नयन् असौ श्वफल्कसूनुः अक्रूरः[2] यमुनाम्बुमध्ये सेवाफलरूपं[3] अन्यैरदृश्य अस्य कृष्णस्यैव विचित्ररूपं ददर्श। पुण्यक्षेत्र निवासिनां सुविमलज्ञाने अनुरक्तात्मनां, वृद्धपरम्परया समागतमपि राजानं कृष्णपक्षाप्रिय दूरेण उत्सृजता सुशान्तमनसां, तीर्थाटनं कुर्वन्तां पुरुषाणां वेद्य हृद्य हरेः रूपं श्वफल्कात्मजः अपश्यत्[4]। भवतो नाम अक्रूर एव। यः करगते कृष्णेऽपि वेदोदित तत्कर्म[5] आचरत्। क्षितौ दुरितप्रध्वंसि कर्म तदेव। क्षितौतीर्थं चापि यमुनाजलमध्यगतं ब्रह्म-हृदाख्यमेव यतो हि जात्वपि श्राव्यया तयोः कर्म-तीर्थयोः ससेवया दास्यैकवश्यः प्रभुः मुररिपु स्वं रूपं अदर्शयत्।

## अक्रूरदृष्टस्य भगवद्रूपस्य वर्णनम्

श्रीकृष्णस्य कान्तिः सहस्रसहस्राशुमरीचिवत् दिक्तटे व्याप्ता। कमलायाः कराब्जेन तस्य चरणाख्यारुणभास्करः अर्घ्यः। वज्रा-अङ्कुश-पताका-अब्जानां रेखाभिः लक्ष्येन पादतलेन स. उज्ज्वलः। भिन्नप्रवाल-वत् विलसद्भिः अङ्गुलीदलैः मण्डितः। पुष्कलस्येन्दोः समश्रीमद्भिः निष्कलङ्कैःनखैः भूषितः। उत्तुङ्गरत्नखचिताभ्यां नूत्ननूपुराभ्यां शोभितः। तस्य वृषाकपे जङ्घाद्वय लक्ष्मीकराब्जससक्तम्। विभोः जानुद्वयं रत्नदर्पणसङ्काशतया शस्तम्। अव्ययस्य ऊरूद्वय मृदुवर्तुल

(1) यावद्दृष्टिपात चक्षुषा पश्यन्त्य. तत मनसा ध्यायन्त्य, स्नेह कातरा स्थिता;।

(2) स्नानार्थं यमुनाया अवतीर्य

(3) सारथ्यरूपसेवायाः फलरूपं

(4) अक्रूरस्यापि मधुराक्षेत्रवासित्वात् कृष्णोत्तमताज्ञानवत्वात् कंसाख्य प्रभुत्यागात् स्वयमक्रूरत्वात्, यमुनातीर्थं प्रति आगमनाच्च उक्त-गुणवत्त्वम्।

(5) सन्ध्याकर्म।

रम्भास्तम्भवत् सम्भासते । कटिद्वयं च कृष्णस्य करिपोतलसत्कुम्भवत् रम्यम् । हरेः कौशेयवासः उद्यदर्कशतोद्रिक्त रम्यम् । विचित्रैः रत्नैः सुशोभितं हैमं-काञ्चीदाम तस्य । अनेकभुवनानां आधारे तस्य तनूदरे वलित्रयन् शोभते । तन्नाभिसरोवर च विरिञ्च्याख्यभृंगेन शोभितेन अब्जेन स्फुरति । वलिपल्लवसत्कान्त्या उदरबन्धनं प्रज्वलितम् । कृश मध्यः स । विशालोरःस्थलेचन्दनं चर्चितम् । परात्परः सः लक्ष्मी-धराभ्यां आश्लिष्टपुष्टपार्श्वः अङ्कस्थितरमायाः वक्षःकुङ्कुमाङ्केन उपलक्षितः । वक्षसिश्रीवत्सं तस्य । श्रीमद्वनमालाविभूषितः श्रीहरिः स्फुरदिन्दुसमामन्दवरकौस्तुभमण्डन । विलसद्रत्नकटकैः कङ्कणैरङ्गुलीयकैः शङ्खचक्रगदापद्मैश्च अङ्कितानि तस्य श्रीमत्कराम्बुजानि । रेखात्रय युक्तः कम्बुसङ्काशः स्फुरन्निष्क. तस्य शिरोधरः । तन्मुख च अगण्य लावण्यपूर्णं प्रसन्नं सारसमिव । अतिरक्त मृदु स्निग्ध. पक्वबिम्बनिभः तदधरः । कुन्दकुड्मलवत् सशोभिदन्तपक्तिः तस्य दयानिधेः । चन्द्रिका सौभागस्पर्धिना मन्दहासेन मनोहर. हरिः हरिन्नीलस्य ज्वलद्दर्पवत् विलसद्गण्डमण्डल. । तरुणादित्यसकाशाभ्यां कुण्डलाभ्यां मण्डितः । लसन्नासाग्रभया नवचम्पकसम्पद् मुष्टा । चलन्मधुकरासक्तजलजोपम लोचनः । इन्द्रनीलोपलमयशाङ्गसौद्वर्यजिद्भ्रूः । तस्य लोलापाङ्ग मधुव्रतः श्री-भू-मुखाम्भोजासक्त. । हृद्योर्ध्वपुण्ड मध्यस्थेन सद्रत्नतिलकेन उज्ज्वलः । अळकासक्तेन भास्करायमाणेन मुकुटेन अनर्घ्यैः हारैः केयूरैः नूपुरैः एतदद्यै. विराजितः अच्युतः कन्दर्पकोटिलावण्यमन्दिराकार. । सुवर्णमण्टपान्त.स्थ. कमलामलविष्टरः । विधिमुख्यै सुरगणै. मुदितैः मुनिपुङ्गवैः गीयमानः । तद्दयादृष्ट्या आश्रितानां कल्मष क्षालितम् । विश्वस्य स्थेमलयोत्पत्तिमुक्त्यदेः मुख्यहेतुः अच्छशेषफणारत्नछत्रेण शोभितः श्रीहरिः । एतादृशं श्रीकृष्णं अक्रूरः यमुनाम्बुमध्ये ऐक्षत ।

अम्भोरुहपत्रनेत्र त कृष्णं दृष्ट्वा तुष्टाखिलचित्तवृत्ति अक्रूरः तुष्टाव । पश्चात् रथस्थितं त सिषेवे । तथाहि मुक्तोऽपि नैवोज्झति कृष्णसेवाम् ।

यमुना सा विजयते यमिनां परमप्रिया या स्नानमात्रत सुधियः कृष्णं प्रदर्शयति ।

अथ मधुरापुरी उपगम्य पुराद्बहि कृतवसतिः कृष्णः गान्दिनी-सुत अक्रूरं "त्वं पुरतः पुरं याहि" इति अवदत् । प्रियस्य कृष्णस्य सङ्गस्य विच्छेदभयेन निर्विण्णधी· असौ अक्रूरः ग्रहपुत्रकलत्रेच्छा-रहितः सन् माधवं वक्ति– "हे कृष्ण, संसाराख्यस्य असारसिन्धोः जनि-मरण- जरादिभिः ऊर्मिभि बाधितानां अस्माकं प्रेमपाशैः निबद्धाः दाराऽऽगारादिभाराः जगति सुखकरा. किम् ? तस्मात् सत्पताकं सकेतुं रम्यं कर्मन्दिगम्य भवजलधौ भवतां खेदानां विच्छेदहेतु त्वत्पादपोतं अनिशं प्रदिश । हे कृष्ण, तवागमनकाले प्राय· व्रजस्त्रीजनैः दत्तशापः मां अस्पृशत् येन लावण्यवारांनिधिपूर्णमूर्ति· भवान् वियुङ्क्ते । पुण्यं विना श्रेयः को वा उपार्जयेत् ? मुकुन्द, पुण्यानां श्रेण्याः अतिदूरमपि मां सतां दूषणेषु अनुदिनं मूकं कुरु । मीनदृशां स्त्रीणां ईक्षणेषु अन्धं कुरु । त्वद् भिन्नगोष्ठीषु बधिर कुरु । पापकरप्रयाणकरणे पङ्गुकुरु । तादृशकर्मसु अपाणिं कुरु । ग्राम्यरतौ क्लीब कुरु । तदीय[1] स्मृतौ मां मूढं च कुरु ।[2] हे विठ्ठल तव अङ्घ्रियुगार्चने कामः, अमलधिया[3] लोभ , सुपुण्यार्जने मात्सर्यं, तवचरितानुकीर्तनाख्यसुधापानात् मदः, त्वच्छत्रुषु क्रोध , भवत जनेषुः रागः च उदियात् । अन्यत्र न उदियात् । यस्मात् उच्चनिलयस्य राजाद्याश्रययुक्तस्य पुंसः शत्रु शत्रु. न भवति । अन्यस्य राजाद्याश्रय रहितस्य तु शत्रुर्भवेत् ।[4] हे रुद्र त्व हि मनोभिमान्यसि । ततः मम मनः त्वच्छत्रोः कामस्य मित्र[5] मा कुरु । हे ईश मे मनः अच्युतस्य चिन्तनार्च-

---

(1) ग्राम्यविषयाणा स्मरणे ।

(2) मूकत्वबधिरत्वादीना पापफलत्वदृष्ट्या पुण्यदूरं मा एवं कुरु इति प्रार्थना ।

(3) निर्मलज्ञानसम्पदने

(4) कामक्रोधादीना शत्रुत्वेऽपि कृष्णाख्यमहाराजाश्रयवत अस्माकं शत्रवो न भवन्ति ।

(5) स्वाभिमन्यमानस्य भटस्य वैरिणे दानं नोचितम्

नरत कुरु । हे भास्कर, चक्षुरभिमान्यसि । तच्च विठ्ठलवपुसन्दर्शनैकाध्वर कृत्वा कैरवाक्षीणां अनुचरं मा कुरु । यत ताः तव सपत्नानां[1] आश्रया.। स्वामिन् विठ्ठल, सज्जनश्वशुरत प्राप्ता, दिगन्ताम्बरां, उत्क्रान्तावधि योगिनी, मनन-सद्ध्यानादिभिः भूषिता, मोक्षापत्यवती विरक्तिरूपरमणी अहर्निश संश्लिष्यन्त मम काल गच्छतु । अन्यथा न कुरु । यस्मात् तदा काम आलम्बते । विठ्ठलनाम्नि ताम्बूले वि ठ इति वर्णयुग सत्पर्ण-चूर्णे । अपरः वर्ण ल पूगफलम् । हरे गुणौघगणनां महत् कर्पूरखण्डम् । भिक्षुश्लाघ्य अनङ्गवैरि, ससर्पिरागापह तदिदं आकस्मिक ताम्बूल जक्षत् पुमान् संसृतिरोगं कथमेष्यति ? कृष्ण ! यत् ते अघ्रिकमले चञ्चरीकति तदेव स्वान्तम् । इतरत् विषयलोलुप भ्रमद्भुजगसन्निभ स्वस्य अन्तकारि मन्ये । कृष्णः, इति ब्रुवन्तमक्रूर मधुराक्तिभिराश्वास्य विससर्ज । सोऽपि अक्रूरः प्रभो आज्ञा विधित्सु, गृहान् अगात् ।

रोम्णां हर्षणकारिणि श्रवणत पापौघविध्वंसिनि
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्धादिराजोदिते
सञ्जात. सुरमण्डलीषु दशमः सर्गो मुदा रङ्कृत. ॥

—— ——

(1) सूर्यशत्रुनीलोत्पलोपमलोचनाश्रया ।

# एकादशः सर्गः

हरिः गृहं व्रजत तस्य अक्रूरस्य हृदयं ब्रह्मपुरी प्रविश्य इनोदये तां मथुरां मधुरापुरीं निर्विविशे। द्वारि द्वारि[1] स्वभक्तैः[2] आहृत-विविधबलि. उद्यानवापीषु प्रोत्फुल्लाना अम्भोजकुन्दानां प्रकरैः सुरभिणा वायुना[3] अधिवर्त्म सेव्यमानः उरुगुणः ईशः कृष्ण. पुष्पपीयूषवृष्टया[4] सिक्ता सन्मार्गनाडी पापव्रात[5] दिधक्षु सन् अविशत्– प्रथितनिजपुरस्य हृदयस्य ब्रह्मनाडीमिव। पीतवसन. सर्ववित् स कृष्णः अध्वनि रजक रजसा ग्रस्त दशयन्निव वसन समयाचत। कृष्णेन वसने याचिते सति स. रजक दुरालाप चकार। तन्निशम्य दुरात्मनः तस्य शिरो[5] जहार। अकृतकिल्बिषं काय कि करोतु ?

मधुरायाः राजमार्गे गच्छन् हरि पथि पथि नवसौधाना अन्तः स्थिताभि. मुग्धाङ्गनाभि. कुसुमनिकरैःलाजैः कीर्यमाणोऽपि ना. परित्यज्य त्रिवक्रां[6] अविदिततद्गुणकर्मा अपि तां कुब्जामुपेत्य वव्रे। तथाहि चतुरपुरुषकांक्षा वक्रयोषित्सु नूनम्। स. कृष्णः मुष्टिप्रमाणतनुमध्यवती स्वकर्णविश्रान्तगुणां रुचिरा त्रिवक्रा लज्जावशात् विष्वक्प्रयुक्त-

---

हृदय ब्रह्मपुर इतिश्रुतिप्रथिता निजपू भक्तशरीर तस्या ब्रह्मनाडी हृन्मध्यस्था सुषुम्नानाडी। ब्रह्मनाडी प्रविशन् इव हरिः मधुराया राजमार्गनाडी अविशत् तत्रापि

(1) चक्षुरादि इन्द्रियद्वारेषु

(2) चक्षुराद्यभिमानिसूर्यादिभि आहृत तत्तदिन्द्रियजन्यसुखरूपबलि.।

(3) प्राणापानव्यानोदानसमानाख्यवायुना।

(4) मूर्ध्निस्थितवरुणमण्डलात् निःसृतअमृतवृष्ट्या।

(5) शरीरपक्षे वामकुक्षिस्थ पापपुरुषावयवभूत ब्रह्महत्यादि पापसमूह मधुरापक्षे कंसचाणूरादीना समूहम्।

(5) दुरालापकर्तृ वदनाश्रयत्वात् शिर कृतकिल्बिषम्। अपराधानुसार शिक्षादेया खलु

(6) जानुमध्यकटिषु वक्राम्।

नयनान्ताख्गशरां ता निरीक्ष्य उद्धवकथाविषय कोदण्ड मेने ।[1] कृष्णस्य मधुरवचनमात्रेण पुलकितरुचिराङ्गी चञ्चलापाङ्गभृङ्गी सती सा कुब्जा कृष्णस्य अङ्गरागं ददौ। खलकुलवनदावः वासुदेवः त्रिवक्रा इति अनुचितमभिधान[2] त्याजयन् तां त्रिवक्रा ऋजुगात्री ततान। तस्या प्रपदे निहितपादाम्भोजफुल्लप्रसून कृष्ण तस्या वदनं उपगतेन द्व्यङ्गुलोत्तानेन दोष्णा तां त्रिवक्रा उन्नमय्य ऋजुतनुमतनोत् ।[3] तथाहि। चिबुकगतकराणां अञ्चतां[4] पुसां वक्रा ववाग्ति । कृष्णस्य करः वक्रामपि तां तन्वी ऋज्वीमकरोत् । कुपितां बाला अनुकूलयितु कर[5] एव हि कारणम् ।

कुब्जादय.[6] गन्धार्पणात् रुचिरवेषकरणात्, मनोज्ञकुन्दप्रसूनरचितामलमाल्यदानात् कृष्णस्य महाप्रसाद अलभन्त । विभु त सर्वविधिभिः अर्चयन्त महाप्रसाद लभन्ते इति किं वाच्यम् ?

अथो रमेशः राजाध्वना धनु पूजानिवास समधिगम्य कोदण्ड खण्डनं चक्रमे । तद्युक्तम् हि । सकलदैवतानां मुख्यदेव कृष्ण जडतमस्य धनुष बलि कथं सहेत ? सद्वंशजातोऽपि [7]गुणान्वितोपि[8] शिक्षान्

---

(1) कोदण्डस्यापि मुष्टिप्रमाणतनुमध्यवत्व मोक्तु कर्णविश्रान्तगुण (मौर्वी)त्व, आदिमध्यान्तभागेषु वक्रत्व च वर्तन्ते । उद्धवाख्ययादवेन कृष्णदूतेन तद्धनुष्कथा वर्णिता आसाच्च ।

(2) प्रियाक्तिश्रवणमात्रेण अङ्गरागार्पणात् एकत्राप्यवक्राया त्रिवक्रत्वमनुचितम् ।

(3) यथा विलासी प्रणयकोपे वक्राया पादे पुष्प समर्प्य वदनं सगृह्य स्तुत्वा अनुकूलयति तथा ।

(4) पुष्पदानादिना मा।यता

(5) द्रव्यदानम् । 'बलिहस्ताशव करा '

(6) कुब्जाआदि. ययो नापितमालाकारयोः ते कुब्जादय. ।

(7) उत्तमवेणौ जातोऽपि

(8) मौर्व्या सहितोऽपि

रूपोऽपि स चाप. तेन कृष्णेन शनै भग्नः । लोके वक्रहृद.[1] पुसः कोवा गुण. कोविदमानयोग्यः ? असौ लीलाबालः कृष्ण प्राक् खलमिव तद्धनु. करेण[2] उदधृत्य गुणावेदन[3] व्यतनुत । तदनुप्रभु.[4] पादाघातं विरचय्य आशु अनमयत् । अथो नम्रीकरणानन्तर भग्नमकरोत् । बलात् नम्रीभूते शुष्कहृदये[5] करुणा किम् ? भग्न चापः भयङ्करनिनदै. स्वभर्तुः कंसस्य धैर्यचौर्यं ततान। व्यग्रस्वान्तान् स्वपालान् दृढतरस्वशकलद्वन्द्वघातैः जघान । चाप स्वभङ्गेनैव उग्राणां मल्लाना प्रकरस्य हृदि भल्लकल्प भयं चखान । विपक्षे द्वैधीभावं विरचयति सति स्वीय एव स्वशत्रुः भवति बत ।

श्रीपते. इति विविध चरित्रं[6] मेरो अपरभागस्थितानां सिद्धविद्याधराणां कथयितुमिव भानुः अमलमेरोः अन्य भाग अगमत् । अगणितविभव. मुकुन्दोऽपि ज्ञातिभिर्जुष्ट स्व निवास अगमत् । सः अस्तङ्गतः रविः काष्ठासु समन्तात् तमः पुपूरा । पुराद् बहिर्गतः मुकुन्दोऽपि भयाख्यं तम. स्वशत्रुषु पुपूर । औदार्य-धैर्यशौर्याणि कंस निष्ठानि गर्हयन् स. भयोच्चयः मधुसूदनदूतवत् कंसस्य मनः ममर्द[7] ।

**कंसभयोच्चययोः सम्भाषणम्**

कस·— कस्त्वम् ?

भयदूतः— अरे कस, सोऽहं त्वदन्तकतटादभ्यागतो वै भटः

कंस.— पृथ्वां क्वास्ति ममान्तकः ?

भयम्— सः भुवनेषु अन्तर्बहिश्च वर्तते ।

कसः— नामाप्यस्य न श्रूयते ?

---

(1) कुटिलहृदयस्य । चापोऽपि हृदये = मध्ये वक्र ।

(2) खलपक्षे हारकटकादिदानेन सत्कृत्य ।

(3) मौर्वी सम्बन्धं, खलपक्षे विनयादिगुणावेदनं ।

(4) एतावताप्यननुकूल

(5) स्नेहविधुरचित्ते । धनु पक्षे शुष्कमध्ये आर्द्रवंशेनधनु करणायोगात् ।

(6) कुब्जोन्नयनादि चरित्रम् ।

(7) कसे उत्पन्न भयोच्चय कृष्णदूतत्वेन वर्णयति कवि

भयम्– देवकीसुत इति ख्यात· स: ।

कस – तस्या हि नन्दन मया ध्वस्त· ।

भयम्– अज्ञ तस्य त्वदन्तकस्य मृतिर्नास्ति । पर तेन कृष्णेन त्वदीया पूतनादय निहता किल ।

कस –शैलसमा मल्ला· सन्ति । जगति प्रख्यात बल चास्त्येव मे । हस्तिसहस्रसम्मितबल· मम हस्ती[1] अस्ति । तत्क्वास्ति मृत्युर्मम ?

भयदूत.– राजन्, भवना चित्ते समुज्जृम्भित अहमेव शङ्कासह स्रार्पक: सन् मृत्युरिव भवाद्भ्. दृष्ट वस्तु भयङ्कर विरचये । यस्मिन् कृष्णे स्वभक्तनिकरै साक नृणां हृदयमन्दिर उत्सृजतिसति प्राक् क्षणात् ते नरा: अन्धा बधिरा विवेकरहिता. मूकायिताश्च भवन्ति । अन्ते प्रेतपुरी प्रयान्ति । जगता ईशस्य कृष्णस्य अग्रत: कि मल्लै किमु हस्ति नाऽतिबलिना ? कि वा त्वया ? कि भटै ?

कस.– हे दुर्मते दूत भ्रान्तोऽसि किम् ? इद विरुद्धभाषण मा ब्रूहि ।

भयम्– कंस, यत् ते मन: मया निर्जित तत् भ्रान्ति विपरीत वागापि ते एव ।

कंस– दूत, मम खड्गाभिहृति इच्छसि किम् ?

भयम्– भयग्रस्तस्य तव चञ्चलात् हस्तात् शनै: गलन् स: खड्ग: त्वामेव हनिष्यति । ईश्वरभट मा हन्तु क: इशोऽस्ति ?

कंस.– अज्ञ, क्लीब: त्व किं कुरुषे ?

भयम्– भवत: क्लीबोपमां दित्सया क्लीबभावं शिरसा दधामि । किं बहुना जल्पितेनाधुना ? स. पवन: मन्नियत: सन्[2] वाति । मन्नियत· अनल: पाक विधत्ते । मन्नियत. असौ सूर्य: समुदेति । तं हरिं ऋते सर्व जगन्मद्वशम् । हे कंस, चित्ते समुज्गृाभित: अह सत्व निष्फलमातनोमि । मुख मलिनं खिन्नं च आतनोमि । गात्र वेपथुग्रस्त तनोमि । अक्षियुगल

(1) कुवलयापीडाख्य:

(2) भीषाऽस्माद्वात· पवते । भीषोदेतिसूर्य भीषास्मादाग्निश्चेन्द्रश्च इति श्रुति: ।

अधीर (कजाल) आतनोमि। चित्तच चिन्ताकुल करोमि। वाचि दैन्य, विभवे विरक्तता, भोगावले त्याग, लज्जाया मानस्य, यशसश्च च्युति च विरचये।

कस - रे रे मन्द, बहि प्रयाहि

भयदूत - भो भोजेश कस यदि कृष्णाश्रितो भूया: तर्हि तथा करामि। अपरथा उभयत्र त्वां नोत्सृजे। धैर्यस्थैर्ययुतस्याच्युतस्य प्रियाणां मनः मह्य न वै रोचते। तस्य कृष्णस्य वैरिणां चेत. प्रतिदिन मम क्षेमाय अभ्युदया च भवति। कस, शम्भु सम्भज, पद्मयोनिमथवा, चन्द्रेन्द्रवोन्द्रादिकान् भज स्वर्गं गच्छ, तमो व्रज, प्रविश वा पाताल अत्रैव भुवि भित्तिसहस्रैः वारिधिना महाशैलेन ज्वलत्पावकैश्च रक्षां कृत्वा तिष्ठ तथापि कृष्णविमत त्वां न त्यक्ष्याम्यहम्।[1] स्तब्ध कस यस्य चित्ते अहं उज्जृम्भित स युद्धार्थं कदाऽपि न गच्छति। गतोऽपि ओजस्विनां पृष्ठत. तिष्ठति। कथचित् पुरोगच्छन् शत्रुमवेक्ष्य शस्त्रनिकर क्षणेन पृथ्व्यां उज्झति। तृणानि च अङ्गुलोदलानि च अदन् शत्रु स्तौति। शत्रुणा मुक्त कम्पी पतन् धावति- इत्थ बहुलोकनिन्दितदशां सम्प्रापयिष्याम्यहम्। हे भूपकस गाथा तावत् तिष्ठतु। सम्प्रति[2] भवान् निद्राति किम्? कथचन निद्रितोऽपि शाभन स्वप्न पश्यति किम्? रिपु अनिशं न शङ्कते किम्? हृदि धैर्यं सन्दधाति किम्? अनुचरान् धीरान् उद्वीक्षते किम्? स्वैरमद्वशमानमस्य सौख्यार्थिन भवत. सौख्य क्वास्ति?

इत्थ साध्वसन्दिग्धबुद्धि. स कस. निद्रा न अध्यगात्। लब्धनिद्रोऽपि दुःस्वप्नै स्पर्धया उन्नद्ध व्यबोध्यत।

तत अर्क तमिस्र परिहर्तु अभ्रग राजमार्ग[3] समाससाद।

---

(1) रुद्राश्रितस्य बाणस्य भयदर्शनात्। ब्रह्माश्रितस्य हिरण्यकशिपो भयदर्शनात्। चन्द्रादीना राह्वादिभ्यः भयम्। पातालगतस्य हिरण्याक्षस्य भय दर्शनात् समुद्रादिना रक्षांकृत्वा स्थितस्य नरकासुरस्यमृतिरस्ति। एव अन्याश्रयणे भयं वर्तते।

(2) भयोज्जृम्भणकाले

(3) सोमो राजा इति श्रुते चन्द्रास्तमये तन्मार्गे सूर्य आगत।

हरिश्च स्वकरे. असद्र्ातगिस्त्र जिहीर्षु. गापै सह राजमार्ग आससाद ।

गजरम्यगतिः कृष्ण राजमार्गे गच्छन् रङ्गद्वारिस्थितेभं अथ हस्तिपं च विलोक्य 'मार्गं प्रदेहि करिणा सह दूर एहि, नो चेत् विदूर कृतान्तलोकं प्रयास्यसि' इत्यवोचत् । हस्तिपः अम्बष्टः– "वनवासिज नैकमान्य भो कृष्ण तिष्ठ, तिष्ठ । शत्रुसन्दर्भस्य केसरिसमेषु जिनश्रमेषु विदग्धेषु यत्रवासिजनेषु पुङ्क्प्रौढि बकौल शल्य अस्ति तादृशं प्रौढिः बल कुशल वने सञ्चरत तव गोपालस्य नास्ति ." कृष्णस्तु– हे जना , मन्दमते. अस्य अम्बष्टस्य प्रौढि विचारयत । अस्य हस्तिनः विध्वसने उद्यतकरस्य मम वने निवास. दूषण किम् ? विमतकेसरिसम्मितानां एतेषां प्रतिदिन नगरे निवास भूषण किम् ? इत्युक्त्वा "प्रौढि तथास्तु अस्मदीय बल कौशल च पश्य" इति उदीर्य तरसा किरण त कुवलयापीड निहत्य तस्य करिण अङ्घ्रीणां मध्ये अधिगम्य विलिल्ये । तदा हस्ती व्यकम्पत । शौरि न जगृहे । अपारशक्ति कृष्ण पुरुसत्वं अमु हस्तिन पुच्छे प्रगृह्य पुनश्च बहुदूर नकर्ष । गजस्य अग्रे धावन् विभुः निजनिपात विशङ्किन अस्य गजस्य भूलग्नदन्तयुगल शिथिलीचकार । कृष्ण भुवि पतित विशङ्क्य कृष्णताडनाय भुवि सहते आत्मदन्ते अनुषक्तबहुधूलि. इभ आत्मबुद्धयुचितं सिद्धसिद्धि इव अम्बरस्थ सिद्धेश्वराणां कृष्णस्तुतिगिरा[2] पथि वण्यमान. विरेजे ।

इत्थं अम्बुजाक्षः स्वीय बलकौशल प्रदर्श्य करिणं पद्भ्यां तरसा प्रपीड्य ममर्द । उत्खातौ तस्य धवलदन्तौकरे धृत्वा स हरिः तत्स्वामिन अम्बष्ट तदनुगांश्च लीलयैव क्षणेन ममर्द । तस्य श्रीकृष्णस्य अघ्रौ सङ्तानां सहजाङ्कुशरम्यरेखानां भीत्या इव तत्पादप्रहारेण विवशः असौ वारण. कम्पितमहीधरभूप्रदेश सन् कुवलगापीड[3] इति स्वनाम गुणानुकूलं कुर्वन् भुवि पपात किल ।

---

(1) प्रकारान्तरेण बलकौशल प्रदर्शगति ।

(2) कृष्णविषयकमिथ्याज्ञानेनैव गजमुखेधूल्पिपातोजात इति वर्ण्यमान इभो रेजे ।

(3) कौ पृथिव्या वलय मण्डल आराम्यक् पीडयतीति कुवल्यापीड ।

स्वांसस्थस्य उत्खानदन्तस्य परिशोभिरक्तबिन्दुभिः ससतक-निर्मरतनु द्विपारि हरि रक्षस हिरण्यकशिपो विदारणाख्येन विलासेन धृतान्त्रमालाधरेण वक्ष स्थलेन अद्भुतनृसिंह इव आबभासे ।

द्विषतां लोकद्वये भोक्तव्यस्य सुखसमूहस्य प्रत्यूहकरौ विघ्नेश्वरा-विव कुवलयापीडस्य एकैकदन्तंधृत्वा अश्रान्तौ तौ रामकृष्णौ विभू-रङ्ग विविशतु । रङ्गप्रवेशानन्तर तयो रामकृष्णयोः मल्लाभ्यां चाणूर मुष्टिकाभ्यां सह ख्यातयोः सिंहयो मत्ताभ्यां गजाभ्यां इव युद्ध प्रववृते । स्वभक्ति. ससारमिव कृष्ण चाणूरमभ्यगात् । तत्कृष्णस्य ज्ञान पापौघ इव रोहिणीसुत बलराम. मुष्टिकं अभ्यगात् । विविध चाणूरमुष्टि-कयोः अभ्यासकौशल्यमपि, अव्यग्रमरशोः फणिपति– यदुपत्योः अग्रतः निष्फल आसीत् । तथा हि । अनवस्था अतियत्नेन अभ्यस्ता विद्या सहज तेजोबुद्धिभाजां अग्रे फलति किम् ? समरे अङ्गालिङ्गने तत्परस्य, चरणस्पर्शे उद्यतस्य अपि अल नम्रस्य, परितः स्व उपेयुष. अपि चाणूर नाम्नः मल्लस्य वशे कृष्णः नाभूत् । सङ्कर्षणश्च मुष्टिकस्य वशे नाभूत् । दुष्टे वञ्चनया आचरितां मृत्युप्रदा आलिङ्ग-नादिसत्कृति लोके मतिमान् विश्वसेत् किम् ? अशनि समस्य कठोरस्य मल्लस्य हस्तघात. हरे. मृदुनिकलेवरे अफलोऽभूत् तथाहि । मृदुसरसकवे पुरतः कठिणपदप्रियकाव्यकारशीला ईड्या किम् ? दुष्टेभपञ्चाननः श्रीकृष्णः तस्मात् चाणूरात् लब्धां जयाख्यां कामिनी लषन्निव रिपो चाणूरस्य पादौ गृहीत्वा[1] , तत्कालार्हं[2] भ्रम[3] प्रतिदिशन्निव त मुहुः भ्रामयित्वा, द्विष तस्य अङ्गे अभ्यासेनसमोधितां कठिनतां पश्यन् इव क्षितितले तन्मूर्धानि अताडयत् । स. पृथिव्यां चूर्णितः चाणूरमल्लस्य मूर्धा अन्यलोकगमनाय उद्यतस्य महाभीतस्य कसस्य परिपन्थिसुशान्त्यै बालमल्लस्य कृष्णस्य करेण चूर्णितस्य भास्व-

---

(1) दातु पादग्रहणादिपूर्वक कन्याया ग्राह्यत्वात् ।

(2) असुरवधकालार्ह कन्याऽऽनयनकालर्ह च

(3) विपरीतज्ञान । मृतौ विपरीतबुद्धिभाजः दैत्याः । कन्यापक्षे, दातु चित्तवैकल्यम् ।

नारिकेलफलस्य तुलनां जगाम[1] । प्रौढानां पतिः हरिः मल्लवरं चाणूर पदो. प्रगृह्य प्रसभ धरण्यां निपात्य सञ्चूर्णयन् स्वसहोदराणां कसकृतस्य उन्मूलनकर्मणः योग्यां प्रतिक्रियां प्रचक्रे । बलरामस्य हस्ततलघातेन नष्ट मुष्टिक द्रष्टु ह्रिया इव [2] चाणूरस्य शिरः पूरा एव चूर्णितं सत् रेजे । रामः "मे मुष्टिप्रहारस्य अयं मुष्टिक. लक्ष्यो न भवति" इति लक्षयन् अपार्थनामकं तं मुष्टितलघातेन जघान । [3]

"हे मद्भटाः कृष्ण मन्नगरात्[4] तत्पक्षीयैः [5] समं बहिष्कुरुत । आशु नन्द[6] मारयत । त हीनं उग्रसेन[7] भुवि मर्दयत ।"– कसेन इत्थमुदोरिते सति अखिलखलश्रणीवनस्य उग्रानल कृष्णः तस्य कंसस्य आज्ञाधरवत् सुजनस्तोमस्य अन्तकस्य कसस्य अन्तिक जगाम । तदा मदेन अन्धा. अन्ये चतुरङ्गिणीभि. चमूभि· एन कृष्ण परिवव्रु – पतङ्गाः ज्वलन्त ज्वलनं यथा, यथा वा तमसमूह तरणिम् । तदा रणे पदाभ्यां चरतः स्वाभ्युदयप्रदस्य परस्य मुरारे. सेवां भवि कर्तुकाम सः सहस्रनेत्रः ससूतं रथं कृष्णार्थं समादिशत् । अथो अतिविचित्ररत्नखचितः तारावृतः चन्द्र· इव स्थितः रथाग्रय. मुकुन्दस्य सन्दर्शनेन विधूतपाप मुनि[8] खलात् ऊर्ध्वलोकं नेतुमिव अवततार । स. इन्द्रः सहस्रनेत्रः अनिमिषाणां प्रभुः शतक्रतुः वज्रधरो हि लोके । यः हरेः

(1) राज्ञ यात्रादौ विघ्नपरिहाराय तदाश्रिता मल्लाः नारिकेलफलानि चूर्णयन्ति ।

(2) समानबलस्य मल्लस्य सलील तलघातमात्रेण वधं द्रष्टु लज्जया इव

(3) मुष्टि के शिरसि यस्य स मुष्टिक । बलभद्रमुष्टे अलक्ष्यत्वात् अस्य शिरस मुष्टिकः इति नाम अपार्थकम् ।

(4) मन्नगरात् ममशरीराख्यनगरात्

(5) चक्षुराद्यभिमानिदेवै.

(6) भटा; नन्दं इत्यत्र भटानन्द् इति अभिप्रेत. भटाना आनन्द ।

(7) हीना उग्रा पूतनादिरूपा सेना यस्य स हीनोग्रसेन कसः । एतान् अर्थान अभिप्रेत्यैव कृष्ण तस्य आज्ञाधारवज्जगाम ।

(8) कसाविष्टं भृगुमुनि

सुरवरी शरधारगुर्वी सर्या क्षणश करोति। देवदेव कृष्ण: इन्द्र प्रेषितं रथं समारुह्य हस्त्यश्वपदातिभि पीनां सपत्नसेनां जघान। अपि च परित: स्थितानां आत्मीयानां मनोरथस्थ सन् तद्दुरिष्टसेनामपि जघान। स: शस्त्रास्त्रविदां रिपूणां कर-ऊरु-अङ्घ्रि-शिरोधरादीन् शरै: चकर्त। तदा स्वय कृष्ण: कामिनीनां मुदा उन्मीलितलोचनान्ताख्यशरै. अता ड्यत। पुरा चिर वैष्णवस्य इन्द्रस्य सेवनेन मुकुन्दस्य सामीप्यं फल प्रपन्न· स. मातलि· इन्द्रस्य सूत. तस्य कृष्णस्य विचित्रवीर्यं निरीक्ष्य उभयथाऽपि रथे नेतृतया, कृष्णगुणस्तोतृतया च सूत.[1] अभूत्।

गाढतमसे त कस क्रमात् सम्प्रेषयिष्यन् कृष्ण: प्राक् परिपोषयाय धात्री पूतना, विलाम य पाग बक, वात तृणावर्तं च[2] तान् हतान् वत्स अन.—वृषधेनुकादीन् दितिजान् तस्य कंसस्य भारवोढानिव मातुल कृते अश्वेभौ केशिकुवलयापीडौ रजक मल्लांश्च सम्प्रेष्य तत्सेनां प्रेषयति स्म।

सा युद्धरङ्गभूमि. युद्धे पृथिव्यां विस्तीर्णै वरै: हारै. चामरै: सितच्छत्रै एततादितवित्तै क्वचित् सिता, स्रस्तै: कचै: असिभि: नील मणिभि. क्वचिन् नीला, रक्तचयेन क्वचिद्रक्ता, हैमकवचाकल्पै क्वचित् पीता असृक्सरिदौघमग्नकुणपा सा रङ्गभूमि: इति स्वनाम तदा अनुकूलं चक्रे।

प्रभु अच्युत कोपाटोपस्य वशेन रक्तनयनं खड्गचर्मभ्यां उल्लसत्पणि कस पापमिव[3] मूर्ध्निप्रगृह्य पृथ्वीमेत्य निपात्य विस्तृत कच त्रस्त अमर्तं कस प्रेम्णा प्राविलै: साधुसघनयनै. सानन्द आलोकित: सन् चकर्ष।

अथ चक्षु श्रोत्र–मुख–अक्षि पालनपरै स्वीयै: सुरै समेत: कृष्ण. कसस्य देहाभिधात् नगरात् बहिराजगाम। इष्टान् जनान् नष्टान्

(1) सूतौसाराथिबन्दिनौ इति भास्कर।

(2) राजानो हि पक्षिमन्दमारुतेन क्रीडन्ते।

(3) पापपुरुषमिव।

निरीक्ष्य, विमत कृष्ण अतिपुष्ट दृष्ट्वा कंसभटानामानन्दोऽपि क्षयमेयिवान् । हीना उग्रसेना यस्य सः कंसोऽपि खलः हृत । कंसः अन्तर्वृत गर्वपर्वतवर. पोतस्य कृष्णस्य हस्तघातेन आहतः मन् वक्त्रं दर्शयितु सुलज्जित इव उग्र अन्धतमः प्राप । 'द्वषिणा कंसेन युक्त मां हरिः करुणया अग्रहीत्' इति आश्चाव्यभव्योत्सवः अन्य जीव. कंसाविष्टो भृगुः सुमहस्तोम श्रा गमणस्य धाम जगाम । सः कृष्णः कतिचित् चाणूरादीन् सञ्चूर्णिताङ्गान् कतिचित् छिन्नाङ्गसन्धीन् हत्वा, दोर्भ्यां परिरभ्य रुदन्त्या कंसपत्न्य. कंसस्यकाय दर्शयिष्यन्निव, कंसं तथा न जघान ।[1] यमिनां वृन्दस्य मनसः चन्द्रः[2] कृष्णः श्रमं परिहरन् इव अञ्जसा विमलीकर्तु[3] यमुनाकूलमगमत् ।

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते
सञ्जातः सुरमण्डलीषु महितः सर्गोऽयमेकादशः ॥

---

(1) मञ्चादध पतनवेगेनैव गतासु चकार ।

(2) तन्मनस्तापशान्तिकृन् कृष्णस्य श्रमाभावे हेतुरिद विशेषणम ।

(3) स्वपादस्पर्शेन यमुनामेव विमलीकर्तुम् ।

## द्वादशः सर्गः

एवं कंसवधानन्तर प्रणतेषु वत्सल मथुरापति. कृष्ण. मुदा सदसि उग्रसेनं आहूय यदूनामधिपं चक्रे। "कृष्ण[1] तव शास्त्रमेव मम राज्यं, नियमा एव सेना, तितिक्षा अङ्गना। नित्यं भक्तिविरक्तिदैन्य-शमन ज्ञानदीनां लाभः एव धनम्। स्फुरच्चामरे मच्छोत्रान्तिकराङ्गते तव यशोधारे। छत्र मूर्ध्निकृतं भवातपहरं हस्तारविन्द तव। मम दुर्गं त्वत्क्षेत्रम्। वर्म आर्याणां करुणा। रथः त्वदङ्घ्रिध्वजासक्तः मम मनोरथः अमन्दा हयाः छन्दांसि। सारथि प्राणः आयुधं त्वदभिदा। जेयः शत्रुः कलि. तद्भटाः कामक्रोधादयः षट्। तेषा नगरी संसृतिरपि जेया। अथो लभ्या विमुक्तिः पुरी। अब्जलोचन हरे, यथा त्वं सततं पूर्ण. साम्राज्य नेच्छसि, तथा त्वत्सेवया पूर्णा. वयमपि साम्राज्यं नेच्छाम. शास्त्रविचारे विस्तृतधियः उदितप्रेमाश्रुधाराधरा' पुलकाङ्किताङ्गा' ये भक्ताः श्रेयस्कर श्रीकर त्वां सेवन्ते, नाथ कृष्ण तेषा ऐहिकसम्पत् नास्ति इति अज्ञैः गीतां कथा उन्मूलयितुं यदि मे मदः न स्यात् त्वद्गदितं साम्राज्यपालनं करोमि। चक्रधरः उग्रसेन यदूनां पतिं चक्रे किल यतः विश्वेश्वरस्य तस्य यदुमात्राधिपत्येन किं प्रयोजनम्। कंसविध्वंसी सः कृष्ण तन्मही तत्पित्रे ददौ। परार्थैकफलः साक्षात्पुराणपुरुषो ह्यसौ। हरि. सर्वे वयंत्वदुक्तिकारिणः इति उग्रसेन अब्रवीत्। भक्तमात्रोक्तकर्तुः दयानिधेः तत् अपूर्वं किम्? माधवः 'राजन् उग्रसेन, वयं तवसेना मध्यगाः इत्याह। विश्वमध्यगत[2] स्यास्य सेनान्तः किं नु दूषणम्?

[3]कुब्जातन्वा उज्जृम्भकः कृष्णः मम सर्व वक्र अनुदिन अवक्र-यतु। मल्लानां लयकृत् सः अस्मद्रिपून् धुनोतु, कंसस्य हिंसाकरः बन्धक कान् बन्धून् वियोजयतु। माधुरः हरि· अस्माकं रम्यां व्याख्यानादिधुरं सन्दद्यात्। रङ्गस्थलीरञ्जकः अस्माक अन्तरङ्गविभवं सन्दद्यात्।

(1) कृष्णदत्त लौकिक साम्राज्यं अरोचममानस्य कृष्णप्रणतस्य उग्रसेनस्य उक्तिरियम्।

(2) अणुरेणु तृणकाष्ठपरिपूर्णस्य।

(3) उक्तकथानुवादपूर्वक स्वाभिष्टप्रार्थना।

येन कृष्णेन मधुरा मधुरापुरी समभू-उज्झिता समभूत् । महता अहृतार्थं प्रद स्मरनात त कृष्ण स्मग्त । यस्यां जल कृष्णस्य उदारैः विहारैः खण्डितमल मङ्गल यस्याः स्थली तत्पादाम्बुजयो. लक्ष्मभि लक्ष्य विभवा धन्यस्थली, यस्या गेहानि नित्यं स्वभर्गुः स्थिते. रमया कृत-स्पृहाणि शुभकरो सा मधुरापुरी अस्माक भूयांसि श्रेयासि दद्यात् ।

अथ जगत्पित्रा कृष्णेन मृदुभाषणपूर्वकं प्रणतौ तौ पितरौ देवकी वसुदेवौ चक्रिणि तस्मिन् ईश्वरे पुत्रबुद्धि न चक्रतुः । ईशः कृष्ण. तौ पितरौ कसकृतात् निगडात् विमुच्य स्मितवक्त्र प्रियं वदन् कृतस्नेहः मायामयं निगड अयोजयत् । अथ धर्मपथस्य अध्यक्ष. जगदेकाराट् कृष्णः जगदे– "योऽहं वृद्धयोः युवयो· पोषणादिक हितं न चकार सोऽह केवल वार्तामात्रेण भवतो· पुत्र." [1] इति एवमुक्त. वसुदेव· वक्ति–हे तात कृष्ण त्वया सर्वं पुत्रेण कर्तव्य कृतम् त्वया अस्मदीये अन्वये उदितम् । तेन इद यादवकुल तिलकीबभूव ।[2] मम कीर्तिश्च विस्तृता किल । येन त्वया अनेकखलान्, बलिन वशद्रुह् कस च निहत्य दयया अयं शृङ्खला बन्धग्रन्थि· व्यप्रोजि । तेन त्वया किंकि न कृतम् । अम्बा देवेकी तं कृष्णं परिरभ्य फुल्लकरसन्माल्येन तस्यार्चनं, नेत्रानन्दजलेन सिञ्चनं उरोजोन्नतयोधारया नैवेद्य, शोभन वीक्षणार्घ्यं लसन्नीराजनच निवेद्य भाविन्या स्वीयमुक्तिलतिकाया बीजं निज निर्ममे ।

यौ व्रजे अङ्गनाभिः समं गृहस्थानां उचिताः रम्याः लीलाः प्रचक्रतुः विधिना उपनीतौ तौ सुतौ रामकृष्णौ शूरेसूनुः वसुदेवः उपवर्वीतौ वितेने किल । कृष्णोपनयनमहस्य ईक्षणे उत्सुकाः धृतनियमाः आप्तकामाः मुनयः उत्तरत्र स्वेषा उपनयनादिनिदान जनि परिहर्तुमिव समेताः सन्तः सर्वतः उपययुः किल । कृष्णोपनयनकाले वाद्यानि मन्त्रान् उच्चारयन्त· मुनयश्च बन्दिवृन्दैः सहनेदु. । नाकिलोके वृन्दारकाणां

(1) वस्तुतः नाहं पुत्र इति हृदयम् ।

(2) यादव श्रीकृष्ण. इति कुलस्य कृष्णनाम्नासह पठ्यमानत्वात् सर्व लोकविभूषणं बभूव ।

स्तुतयश्च गन्धर्वगीतैः सहनेदुः । रागयुताः समस्ताः नार्यः नयनोत्सवं तं मुकुन्दं रक्ताक्षतैः अवाकिरन् । तत्परिरम्भणोत्का कुब्जा ध्रुवं दुरन्तां चिन्तां आप । अम्बायाः देवक्याः पितुः वसुदेवस्य अञ्चतां सतां च सत्प्रेमदामोपमं तयोः रामकृष्णयोः गले सम्बद्धं विशदं त्रिगुणितं यज्ञोपवीतं प्रत्येकं बहुगुणवद्भिः तस्य हरेः विलसद्भिः ज्ञानानन्दादिगुणैः अन्तर्गरिष्टं स्तोतृस्तव्यतया[1] तयोः रामकृष्णयोः आश्रययुतं स्वच्छं श्रुतीनां त्रयमिव रेजे ।

"इह भुवि लोकं विडम्बयितुमेव उपनीतः असौ हरिः मम अपत्यानां[2] वाञ्छां सत्यां करिष्यति" इति भावेन प्रहृष्टहृदिव विशङ्कः उपनयनमण्टपस्थः अग्निः यज्ववराणां मन्त्रहुतैः हविर्भिः जज्वाल । गर्गाचार्यः सकलविदे पुराणपुंसे गायत्रीमन्त्रं अदिशत् । असौ गर्गाचार्यः तदुपदेशव्याजात् तद्गुणचिन्तकाय मह्यं दयया सद्बुद्धिं प्रदिश इति कृष्णं ययाचे । इत्थं मम ऊहः ।

श्रौतपथस्थितः अयं कृष्णः इतः परं गोपालकानां बाललीलां न याति इतीव वसुदेवः दक्षिणाभिः सह सुभगाः गाः मुदा मुनिभ्यः ददौ । यज्ञोपवीतेन उज्ज्वलकण्टदेशः कृष्णाजिनश्रीः मुनिसङ्घैर्मान्यः प्राणप्रणेता[3] धृततर्कमुद्रः सः कृष्णः ध्यायन् गायत्रीमन्त्रं व्यास इव अभूत् । असौ उपनीतः कृष्णः दिने दिने अग्नौ समिधः जुहाव । तथा श्रुतीनां जननीं गायत्रीं जजाप । स्वकुक्षिपूर्तौ निजानुभावस्य स्मरणोत्सवे च कस्य हि न रतिः ?[4]

---

(1) स्तोतृतयाशेषात्मकं बलरामाश्रितं स्तव्यतयाऽप्रतिपाद्यतया कृष्णाश्रययुतम् ।

(2) अर्चिर्नाम्ना कुमाराणां कृष्णाख्यपतिकाङ्क्षया कन्यात्वं तपसा गतानां अग्निकुमाराणां षोडशसहस्राणां

(3) प्राणायामपरः, व्यासपक्षे प्राणापररूपस्य श्रीमध्वाचार्यस्य प्रणेता व्याख्याता ।

(4) अग्नौ क्रियमाणहोमस्य भोक्ता कृष्णः; एवं गायत्री च कृष्णमहात्म्य प्रतिपादिका ।

आर्या ब्रह्मचर्यव्रतधुर्यं तं कृष्णं सन्दृश्य हृष्टा. । परन्तु कृष्णवक्षः-स्थलस्था अब्धिपुत्री त्रपया आकुला आसीत् । अपि च अभ्यर्थ्यमानौ दिनेशवन्ही च त्रपया आकुलौ आस्ताम् ।

'अत. परं भवान् इद भवारण्य चिदग्नौ निर्दहतात्' इतीव सर्व विदग्रगण्यौ तौ रामकृष्णौ गुरवे समिधः समर्प्य गुरोर्गृहं[1] (गुरुकुलं) उपेयतु । अथो स. धीमान् कृष्णः बलश्च चतुष्षष्टिकला चतुष्षष्टिदिनै प्रजग्रहतु । यस्मात् तत अपि अल्पदिनै आसां कलानां सकृत् समुच्चारण मपि गुरोः सान्दीपिन अशक्य आसीत् ।

ततो विद्याभ्यासानन्तर गुरवे उपायन दिशन् कृष्णः गुरु सान्दीपिन किं देयमिति अपृच्छत् । मुरारे सदयावलोकनै विमलीकृतान्वयः स गुरु. पुरा मृतमपि बालक मुरारे सदयावलोकनै. अवद्यात् परिपाल यन्निव सुत ययाचे । सः कृष्णः गुरोः सुत मृत्युना नीत विजाजन् अपि शङ्खदैत्य पञ्चजनं विनिहन्तुकामः समुद्रमासाद्य रक्षः शङ्दैत्य निहत्य लसद्यशःसम्मितं पाञ्चजन्यशङ्खं आप । स कृष्ण पञ्चजनाख्या-सुरस्य देहस्थान् पञ्चप्राणान् तद्देहतः बहिर्निष्कास्य तेन दैत्येन साक पयोनिधि अपञ्चजन[2] आतेने । विभुः सः कृष्णः यमालय प्राप्यउद्घृतं रिपुदर्पहारिणं त पाञ्चजन्यकम्बु "मम गुरोः सान्दीपिनः सुत देहि । न चेत् यम, तवापि इयं दशा[3] भवेत्" इति निदर्शयन्निव प्रदध्मौ । "ईश कृष्ण, लक्ष्मीशस्य तव गुरोः सुतस्य अमृष्य मुक्ति करगताऽभूत् ध्रुवम् । त्वदागमनात् पूर्वमपि तं जिहासु मां विभु. त्व किंकारणमाज्ञापयसि ?" इति बुद्ध्या इव तद्गुरुपुत्रस्य त्यागे निःशङ्कमानस , अलभ्येन कृष्णदर्शनेन सञ्जातसम्भ्रम, प्रहृष्टरोमा, मुहु मुहु. कृष्ण प्रणमन् यम. त समभ्यर्च्य सुन समादिशत् । तत शौरिः अनकान्तिकात् गुरु-

---

(1) सान्दीपन गृहम् ।

(2) न विद्यते पञ्चजन पञ्चजनाख्यासुर यस्मिन स पयोनिधि न विन्द्यन्ते पञ्च जना पञ्चसख्याका प्राणादय यस्मिन् स दैत्य, ।

(3) वैरिणं हत्वा तदङ्गात् अस्थ्युद्धरणरूपावस्था ।

सुतं समानीय गुरवे प्रदाय स्वकां मथुरापुरीउपेत्य पित्रो देवकीवसुदेवयोः अपि दक्षिणामिव निजं स्वविग्रह प्रदर्शयामास ।

राजराजपदस्यापि त्राता रमापतिः यत्र राजा भोज-वृष्टि-अन्धकं आश्रिता सा राजधानी मथुरापुरी जयति । यस्य ध्वजिन्यां द्विषा उग्रा. बलरामादय अग्रेसराः, स्वर्गिभि. गीतवैभवः सः उग्रसेनः विजयते ।

## मन्त्रिमन्त्रप्रकार वर्णनम्

राजनीतेः हृदयज्ञा मन्त्रतन्त्रज्ञाः मन्त्रिण शार्ङधन्वनः सभायां अन्वहं इत्थं मन्त्रयन्ति ।– "यस्य राज्ञः आज्ञाख्यशरशङ्किचित्ताः भटा. रणे परावृत्य न लक्षयन्ति, जयाङ्गनां वा दिविजाङ्गनां वा स्पृशन्ति स एव राजा विजयी ।[1] य चारेण रिपोः विचार वेत्ति, य सदा रणोप स्करण युनक्ति य शत्रुभिः परिखादिना अगम्यभूमि स एव राजा विजयी न चान्यः । य. स्वससदि प्रौढजनेषु[2] मन्त्रिवरेषु नीत्यागमस्य तत्त्ववित्सु च कार्याकार्यं विचार्यं द्विषतां मिथो विभेदं कुर्यात् सः भूपः सुखभाक् । हे राजेन्द्र, उग्रसेन, यात्रादौ उत्साहेन सङ्गता नीतिः नर-वरस्य उचितौ कीर्तिप्रतापौ सूते ।[3] तत्र नीत्या आलस्य प्रतीपकृत् ।[4] सामादिचतुरुपायानां अवसरज्ञानशून्यस्य राज्ञ शूरता आम्नायार्थानां अपरिस्फूर्ते. वादिन सामर्थ्यमिव । यः अज्ञानी सन्धिमुख्याया. अमल नीतेः प्रयोगकालं अविज्ञाय रण विधत्ते स ससत्सु षण्णिग्रहाणां समया-

---

(1) राज्ञ प्रभुशक्तिरावश्यकीतिभाव. ।

(2) पुरातनवृत्तान्तज्ञेषु ।

(3) पुरुषखसङ्गतस्त्रीवत् उत्साहसङ्गता नीति फलति । उत्साहशब्दस्य पुल्लिङ्गत्वात् नीतिशब्दस्य स्त्रीलिङ्गत्वात् तयो साम्यम् । तथा कीर्तिशब्दस्य स्त्रीलिङ्गत्वात् प्रतापशब्दस्य पुल्लिङ्त्वात् तयोः कुमारीकुमारसाम्यम् ।

(4) क्लीबसङ्गतस्त्रीवत् न फलति । आलस्यशब्दस्य नपुंसकलिङ्गत्वात्त त्साम्यम् ।

नभिज्ञवादीव अकीर्तिं याति । यः क्षितीश नानाप्रकारैः दशदिक्षु शत्रून् जेतु नैव यतते असौ अवशीभूतदशेन्द्रियौघः व्रतीव कदापि सुखभाक् न भवति । यस्य राज्ञः सैन्यस्य कुन्ताः शार्दूलदन्ता इव स्वसपत्नानां चिन्ता साधयन्ति स्वतन्तौ तदीयदष्ट्रा इव स्वराष्ट्रस्य सन्तोषमपि साधयन्ति सः अवनीशः । हे राजन् तव बाणः त्वया मुक्तोऽपि दिशिदिशि तव अरीन् निहन्ति । गुणिसङ्गस्य वंशस्य आर्जवस्य फल हि तत् । दुष्कराज्ञः य राजा दिवसेदिनेशप्रख्यः सन् पान्थान् तस्करेभ्य अवति, रजन्या च रजनीशकल्प सन् समन्तत् पान्थान् तस्करेभ्योऽवति स एव राजा कीर्त्या दिशां उपान्त एति । यः नृपतिः व्यवहारपदेषु न्याय सगृह्य अन्याय मन्त्यजेत् त नृपनि पदेपदे अन्याय.[1] सन्नम्य अभ्यर्थ यिष्यते[2] । दिने दिनेशप्रख्यः रात्रौ रात्रीशसन्निभ प्रजाः कापथेभ्यः रुन्धे स राजा सः विशां इनः[3] । प्रायेण धनवानेव क्लेशवानपि जायते । फलवान् तरुरेव कण्टकैरुपरुध्यते हि । यः राजा काले काले अर्थिभ्यः नूनं हि धनं वितरेत् स सर्वदुःखेभ्यः मुच्यते- द्रुमः कण्टकेभ्य इव । यः प्रत्यह वित्तैः कीर्ति शरैः शौर्यं समार्जयेत् स एव सम्राट् धनवान् । अन्य अकिञ्चन मन्ये । यः भूपः अर्थिभ्यः अर्थं अनादिश्य तत् क्षितौ निक्षिपति, स स्वयोग्यां मृत्स्नां आदाय वित्त भूम्यै प्रदत्तवान् । यस्य राज्ञ सर्वज्ञे अमला भक्तिः नैव, एतदाज्ञात्मके धर्मे वा न रतिः तदाश्रितजने सन्मानलेशोऽपि वा न, तस्य निष्ठुरगिरः दुर्मन्त्रदत्तश्रुतेः साम्राजं निजवशपोसनकृतेः कंसस्य ससारवत् भवति । विष्णुभक्तिरतं भूपं विष्णुप्रिया लक्ष्मी नैव त्यक्ष्यति । पतिव्रता सा तद्द्वेषिणि स्थातुं न उत्सहेत । धर्मद्वितीय नृपति अन्य.धर्म (यमधर्म) नैव पीडयेत् । अन्यथा अप्रतिमल्लः असौ यमधर्मः सान्वय राजानं संहरिष्यति । यस्तु राजा विष्णोः अर्भकसङ्काशान् वैष्णवान् निन्दति । तस्मिन्नपि

---

(1) अन्येभ्य. पौरजानपदेभ्यः आय द्रव्यप्राप्ति अन्याय ।

(2) यथा राज्ञा परित्यक्तः पुरुष मा परिपालयेति त अभ्यर्थयिष्यते तथा परित्यक्त 'अन्याय' राजान अभ्यर्थयिष्यते ।

(3) चन्द्रसूर्यसाम्यात् चन्द्रसूर्यवाचकौ राज-इन शब्दौ अस्याप्युचितौ ।

राज्ञि श्रीः न स्थिरा भवति– पुत्रद्वेषिणि मातृवत् । दुष्टप्रीतिरत भूपं क्रमात् दोषोऽपि स्पृशति । विनयादिगुणलुब्धा श्री दोषिण नाश्रयेदिति मे मतिः । इन्दिरा कठोरगिर नृपमुत्सृज्य अपर मृदुवचनं वृणोति– तटित् उग्रस्तनितात् पूर्वमेव घन विहाय दिश इव । सन्मन्त्रशीर्णः दुर्मन्त्र. प्रयोक्तारं क्षिणोति यथा नृसिह् मन्त्राख्य सूर्यस्य अग्रे भैरव मन्त्र कैरवद्युति भवति । य राजानं प्रजा. न प्रशंसन्ति, यश्च अर्थिभिः न स्तुत. विषयसक्त कुमते तस्य भूपते सुख नास्ति । यो लुब्धो राजा प्रजानां पीडनं कृत्वा धन-मार्जयेत् स राजा स्वसुतानेव विक्रीय वसु सञ्चिनुते वै । प्रजानां धर्मतः परिपालनेन रञ्जनकृन्नृप प्रजापरम्परामेति[1] । पीडिता सा प्रजा सनाम्नी (प्रजां) तस्य राज्ञ· कुले नोत्पादयति[2] । अपूजित· अतिथि अपार्थकं स्वीयं अतिथित्व तस्य अपूजकस्य तिथ्या अपूज्यत्व अर्पयन्निव समर्पयति । स्रक् चन्दनादि विषयेषु उपभुक्तेषु सत्सु अस्य उपभुक्तस्य विषयस्य तृतीयांश· एव उपभोक्तु जीर्यते । शिष्टं तु विषसारूप्यात्[3] कष्टाय परिकल्पते । इत्यादिकया अमात्य वर्गोक्तनीत्या पृथ्वी पालयन् मुकुन्दे भक्ति बिभ्राण. स· उग्रसेनः विषयस्पृहां तत्याज ।

रोम्णां हर्षणकारिणि श्रवणत. पापौघविध्वंसिनि ।
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्वाद्रिराजोदिते
सञ्जातः सुरमण्डलीषु महित. सर्गो मुदां द्वादश· ।।

—— ——

(1) पुत्रपौत्रादिवृद्धिम् ।

(2) निष्कासितः याचकः याचकान्तर निवारयति तथा पीडिता प्रजा प्रजान्तरं निवर्तयति ।

(3) विषय इत्यत्र तृतीयांशः यकार. । तदवशिष्ट 'विष' सारूप्य भजते ।

# त्रयोदशः सर्गः

अथ व्रजेश्वरः कृष्णः स्वस्य इमां रम्यां ब्रह्मचर्यस्थिति निशम्य निजागमस्य आशया धृतजीवनाना व्रजाङ्गनानां, स्वसूनुताशाया अपगमाच्च[1] पित्रो यशोदानन्दयो च हृदि खेदशङ्की सन् आत्मनः वियोग वन्हेः सकाशात् प्रनप्त स्ववर्ग सुखार्थसन्देशसुधाप्रवाहै उज्जीवयितुं स्वकीय उद्धव "व्रज व्रज" इत्यादिशत् । स चोद्धव. प्रियस्य कृष्णस्य वियोगेन समुत्थं साध्वस तदीयै. सन्देशवरै. विदूरयन्[2] मधुद्विषः अदः प्रपन्नवात्सल्य स्मरन्, वर्त्मनि श्रम विस्मरन् ययौ ।

अथ निशामुखे सः उद्धवः ईशितु कृष्णस्य व्रज प्रविशन् परिस्फुर द्वेणुना क्रियमाणसङ्गीतविनोदेन वेदितस्वभर्तृ (कृष्ण) लीलारसैः गोप बालकैः मण्डित गवां निकुरम्ब ददर्श । तदा अध्वनि उत्क्षिप्तपुच्छं उदितालारवेण अभिराम धावनविलासेन कम्पिताङ्ग वत्सं वीक्ष्य अनुधावनपरा गौः कृष्ण. स्ववर्ग अहमिव अन्वेतु इति उद्धवाय वक्ति स्म । गोधूलि-धूसर-मनोज्ञ-शरीरकान्तीन् करसङ्गतवेणुशृङ्गान् गोपान्निरीक्ष्य कृष्णस्य शैशवविलास अनुस्मरन् स. उद्धवः मोदाम्बुना पूर्ण नयनः पुलकै अङ्कितश्च अभूत् । कृष्णेन भुक्तवरभूषण–वस्त्रमाल्य धर कृष्णभृत्य उद्धवं निरीक्ष्य ताः गाव. निजनाथाधिया इव उन्नम्रकन्धरं उदीरितकर्णयुग्मं पश्यन्त्यः उद्धवस्य मनस. अभ्युदय वितेनुः । स्ववर्गे प्रीतमना अरविन्दनेत्र य निज उद्धव व्रजं प्रति दिदेश सः कृष्णेन आज्ञप्त उद्धवोऽपि दूरात् स्वद्रष्टॄणां त्रिलोचनेषु उद्धवमेव[3] निवेशयन् व्रज विवेश ।

गृहे गृहे कृष्णकथामृतेन आततं, तदर्चनाय आहृतेन धूपेन वासित, तदर्पितै. स्रगम्बरालङ्कृतिचन्दनादिभि. विभूषितस्त्रीपुरुष, हरेर्नाम गृणद्भि शुकैः तद्गुणरवानुवादिभि पिकैश्च हरिकिङ्करप्रभैः मुकुन्द

(1) वसुदेवेन उपनीते कृष्णे स्वपुत्रोऽयमिति आशायाः अपगम

(2) आकाशवद्व्याप्तेन मया सह विरहो न घटते इति सन्देश ।

(3) उत्सवमेव ।

पादाम्बुजवत् शोभिनि नीरजे स्थिरैः द्विरेफैश्च आवृतं, सदा मुकुन्दागमनस्य अभिशङ्कया सपूर्णैः कुम्भैः शुभैः तोरणध्वजैश्च अलङ्कृतद्वारचय, फलैश्चयै विचित्ररङ्गावलिभिश्च रञ्जित, अन्वहम् मुकुन्दस्य वीक्षाफल काम्यया त्रिकालं चीर्णद्विजदेवतार्चनैः तदीयलीलामृतपूर्णाभिः सत्कथाभिः धृतासुभि लोकैः सङ्कुल गोकुल उद्धवः प्राप। सहसा ततः उद्धवः नन्दस्य सदन विवेश। अन्येषामपि चेतःसु परं उद्धव न्ययुङ्क्त।

सः नन्दगोपः स्वनन्दनस्य कृष्णस्य अङ्घ्र्यम्बुजयोः लुब्धभृङ्ग त उद्धव अर्चयामास तथाहि। लक्ष्मीशपदैकभक्ताः तदन्यत् तदीयबुद्ध्या अर्चन्ति। नन्दगोप उद्धवेन आत्मनि वर्ण्यमाना हरेः कृपां निशम्य जायया सह प्रहृष्टरोमा प्रतिरुद्धकण्ठ प्रहर्षवारिणा अङ्कितलोलनेत्रः अभूत्। "यस्य मुखे विजृम्भिते सति सती इय यशोदा आत्मान इदं जगच्च अपश्यत् अमुना कृष्णेन वियोगवार्ता उत्सृजध्व, पर परब्रह्मधिया भजध्वम्।" इत्थ नन्द प्रति उद्धवः अवदत्। स उद्धवः नन्दं आनन्द निधि विधाय सुदुष्करैः उग्रैः व्रतैः कर्षिताङ्गानां मुनीनां आश्रमसम्मितानि गोपीजनाना मन्दिराणि प्रति जगाम।

काचित् मुकुन्देन सहैव शय्यां प्राप्तु अधःशयनव्रतस्था बत। धन्या अन्या तज्जुष्टताम्बूलफलाय ताम्बूलरुचि तत्याज किल। एका तद्भुक्तशेषे ओदने लुब्धचित्ता सती नित्य अनशनव्रतस्था किल। दीना कापि गोपी स्वस्थाअपि स्वप्नेऽपि तत्सङ्ग आप्तुकामा इव शेते। हरि कान्तं तत्प्रभवं कुमार तज्जुष्टगेह गृह ऊहमाना काचन तन्वी पत्युःपूजां न वितनोति, पुत्ररक्षा न वितनोति नापि गृहकृत्य वितनोति। रतावसाने मुरजित्करेण निबद्धु उज्झितकेशबन्धा तदा एव तत्सहितभूषणेच्छा कापि बाला भूषणं न बिभर्ति। अन्याः दिनेदिने स्वधामवृन्दावन[1] प्रदक्षिणीकृत्य विकस्वराणां क्षमारुहाणां पुञ्जेन मुञ्जुनि मुकुन्दवृन्दावने रासलीलां अर्थयन्ते। कापि गोपी प्रियेण कृष्णेन सार्धं रम्यां गोष्ठी

---

(1) स्वगृहस्थित तुलसीबृन्दावनम्। वृन्दावन प्रदक्षिणीकृत्य प्रदक्षिणा कारा रासलीला वृन्दावने प्रार्थयन्ते।

अक्रूरेना वचसा किं फलमिति दीना सती निजैर्बन्धुभिः जनन्या जनकेन च साकं किञ्चन न भाषते। काचित् इन्दीवराक्षी निजाङ्गं दहतः विश्लेषवन्हेः वृद्धिं विदध्यात् इति चिन्तया इव चन्दनरम्यगन्धिं मन्दानिलं न सहते। "एतावत्कालं मुकुन्दस्य आगमनं वदन्ती सेयं सखी अन्यं विषयं वदतीति उत्थिततीव्रतापा सती अन्या बाला आल्या प्रियं आलापं अपार्थं आलोच्य न हि शुश्रुवे। अन्या गोपी कृष्णाङ्गसङ्गि वरवैष्णववर्गयोग्यं तन्मलयजं अमलचूर्णं दोर्भ्यां कृष्णं परिरभ्य स्वाङ्गे धर्तुं धिया इव कर्पूरकुङ्कुमलसन्मृगनाभिभिः शोभितं श्रीगन्धचूर्णं नेच्छति अहो ! कृष्णस्य उक्तिषु, सन्मुखे, मृदुस्वरे, कुन्तले, अङ्गसौरभ्ये सङ्गत समस्तवृत्तिः कापि गोपी कीर, इन्दु, कोकिल, मधुव्रत मान्यगन्धपुष्पाणि च हृदा न विषयीकरोति।

कृष्णाङ्घ्रिभृङ्गं तं उद्धवं वीक्ष्य लज्जाक्लेशवशगता. सत्यः गोप्यः उद्धवं तथा अग्रत. स्थितं अन्यं भृङ्गं च लक्ष्यीकृत्य श्लिष्टोक्त्या ऊचुः–

हे मधुप[1] त्वं अस्मदग्रे कस्माच्चरसि ? नूनं अग्रचद्विरदवरदमूर्धा[2] रोहयोग्योऽसि। अस्मदङ्गं निर्दहति इह विषमविरहवन्हौ पतितुं इच्छसि किम् ? अत्र दूरे प्रयाहि। हे भृङ्ग त्वं सुमनसां सदसि[3] अलं प्रौढिं आदर्शय। विधुरविविध[4] योषितां तापं किंकारणमापादये ? आर्या. सख्य. ! यत् अयं वसतिपुत्रामित्रवार्तया उज्झितानां नः पुरस्तात् वसति इयं अस्माकं ग्रहगतिः। हे सखि कामिनीनां कामदः[5] सोऽयं वरुणदिशि गतोऽपि बलभर्त्तुर्दिशि स्वैरं उद्याति। हरिपदकृतवृत्तिः धीरः गुरु-

(1) मधुकुलोत्पन्नत्वात मधून् पाति रक्षति इति मधुप उद्धव।

(2) भृङ्गपक्षे अग्रचद्विरदस्य वरद सन्तोषद यः मूर्धा तदारोहयोग्योऽसि उद्धवपक्षे तवस्वामी कृष्ण; महाप्रभुर्जात अत त्वं गजमारुह्यसञ्चर।

(3) उद्धवपक्षे— सुमनसा देवाना सदसि उद्धवस्य बृहस्पतित्वाद् देवैर्मान्यत्वम्।

(4) विधु-रवि-विध चन्द्रसूर्य जातीय, बृहस्पते: नवग्रहान्तर्गतत्वात्।

(5) उद्धवपक्षे कृष्णविषयककामोद्बोधकोऽयम्।

रिव कर्णोपान्तमभ्येत्य गीत[1] श्रावयत्यैव । हे गगनचर[2] अस्मत्सन्निधौ ते किं कृत्य अस्ति ? अस्मद्व्रजस्य दूर हरिपद उपयाया । नन्दसूनोः वक्रया अलकाल्या समरुचि त्वा इह कथं सम्भजामः । कथ वा त्यजामः कथय । हे मधुप त्वदीयः असौ माधव.[3] वनभवनगतानां अस्माकं कतिपयदिनमध्ये स्वरूपं दर्शयित्वा पुन हन्त ईक्षा न दिशति । हे चपल तस्य अनुवर्ती त्व अपि तादृक् । तदस्मासु मैत्र्या किम् ? अयि सखि, स्वैरं अस्मत्पुरस्तात् चरत अस्य सहकारी मरुत्[4] अपि अस्य अग्रचर्शक्ति साधयति । अभिमुखं, अनुपार्श्वं विष्वक् ऊर्ध्व तथाऽधः चरणचतुरशीलः एषः वीरान्[5] शिक्षयेत् । हे प्रियनिनद अमल सुरपतिरपि एतद्गानं निशम्य महिष्य्। शच्याः समं त्वां विलोक्य मानयिष्यति, नूनं शिष्यवत् त्वद्वशः स्यात् । इदानी अस्मदग्रे गायतोऽपि तव कि फलम् ? हे मधुकर त्वं माधवे पक्षपाती असि इति विद्मः । यत. कुजरविजयि चापे तस्य[6] जीवायितोऽसि । विवश[7] विविधरसविलासश्रेणिविश्राणनज्ञ तं नः समीपे वसन्तं विरचय ।"

अथ उद्धवः वितन्यमानस्वप्रेष्ठवियोगार्तीः गोपीः प्रियोक्तिभिः प्रीणयित्वा कृष्णसन्निधि प्रययौ ।

अथ कसे बलैः सह मृते सति अवशिष्टा अत एव अस्तिनाम्नी आर्ता सा स्वमातुः वशमपि तादृश कृत्वा अस्ति इति निजाभिधानं

(1) कृष्णसन्देशरूप ।

(2) आकाशचरः भृङ्ग विष्णुपादभक्त उद्धव गुरुग्रहत्वेन आकाशाश्रितः ।

(3) वसन्तः, कृष्ण ।

(4) उद्धवान्तर्गत मुख्यप्राण ।

(5) अर्जुनादीन् द्रोणाचार्यरूपेण ।

(6) उद्धवपक्षे–कु–ज–रवि–जयि–चाप–इतवस्य कौ (भूमौ) जातस्य रवेः (कर्णस्य) जयिना चापेन इतस्य मुक्तस्य अर्जुनस्य द्रोणरूपेण जीवायित. असि । भृङ्गपक्षे– कुजर–विजयि–चापे तस्य कुत्सितजराणा यूना विजयिनः मन्मथस्य चापस्य जीवायितोऽसि ।

(7) वे पक्षिण गरुडस्य वशं विवश कृष्ण । भृङ्गः शुकादिपक्षिवशः ।

उचित विदधतीइव अच्युतस्य स्वभर्तृववरूप कृत्य पित्रे जरासन्धाय न्यवेदयत् । माधित सैन्यसिन्धु. मदान्धबुद्धिः स मागध अनेकदेशाश्रित भूमिभारहरस्य अच्युतस्य सारथ्यकृत् मधुरां जगाम । सः जरासन्धः अमु चमू जामातु. कसस्य पत्रा तस्मै प्रेषयितु धिया इव गगनं स्पृशद्भिः गजैः रथौवै भासुरभूषणौघैर्भटै. हयैः सह मधुरां प्रति जगाम ।

वादिन. कुतर्कै आद्या उपनिषद्विद्यां इव ते जरासन्धभटाः भगवत्पुरी मधुरां कुन्तै कुठारै कुद्दालै च बभञ्जुः । प्रतिभयाना वर शक्त्याद्यायुधानां ऊर्जिताधारयुवताः खलमतिहृतचित्ता दूष्यदुर्मन्त्रदृप्ताः जरासन्धभटाः उपवेदप्राय उपवनं उन्मूलयन्तः सुकृतसम उदार द्वारं आरात् बभञ्जुः ।

समयिन [1] गतभया क्रुद्धाःखला अमताः युक्त्या आत्मपक्षे [2] अञ्जसा ऐक्य [3] कृत्वा तां [4] निश्चलार्थनिकरै [5] सह बाध्यां [6] अन्त. निर्गुणा गारां [7] कृष्णन समुज्झितां विधातु यत्न [8] अपि वितेनुः किल । अहो दुर्भाष्यपुञ्जैरपि समयोजयन् । [9]

तदध्यायपादसख्योज्ज्वलै अमलै चतुर्भि अध्यायै सहिता अत्यूर्जितां सुवर्णखचितां भास्वत्सूत्रचमू उपनिषदां रक्षार्थं व्यास इव प्रभुः कृष्णः सुवणखचितां रवचमू चतुर्धा कृत्वा तत्रचतुर. अग्रचान् निधाय नगरीरक्षार्थं अदिशत् ।

---

(1) एव कुर्म इति सङ्केतवन्त । अत पर कृष्णजरासन्धयोर्युद्ध तत्व वादि मायावादि वादसाम्येन वर्ण्यते ।

(2) उपनिषद्विद्या, मधुरापुरी ।

(3) मायावादिपक्षे अर्था । जीवपरमात्मरूपचेतनपक्षे ।

(4) अद्वैतम् ।

(5) प्रमाणसिद्धै पञ्चभेदादिअर्थै सह ।

(6) मिथ्याभूताम् (शब्दत अर्थतश्च)

(7) भित्तिखचित पद्मरागादिपातनेन शोभारूपगुणरहिताम् । निर्गुणस्य ब्रह्मणः आगार यस्यताम् ।

(8) शबलब्रह्मरूपे कृष्णे तात्पर्यरहिता विधातु यत्नं वितेनु. ।

(9) पुरी भिन्धि, छिन्धि दह इत्यादि दुर्वाक्यसमूहै ।

चतुर्भि. निगमैः सम्बद्धः मनोभिमानिना खगेन्द्रेण आवृत. विष्णोर्धाम तद्ध्विकेतुनिलयः ब्रह्मसूत्राणां पुष्टिप्रदः मध्वस्य मनोरथः इव त्रिख्य ताश्वचतुष्टय ध्वजाग्रस्थाने पक्षीन्द्रस्य आयतन. परस्यकृष्णस्य वसति., विभ्राजमानध्वनः वृष्णीनां प्रमोदप्रदः रथ तदा वैकुण्ठादभ्यागात् किल । युद्धकाले तदा, वादनिविष्टस्य मध्वस्य वाचःसमा कौमोदकी गदा, समस्तागमगानकर्तु गुरो. मध्वस्य मञ्जुनिनादकण्ठकान्तिः पाञ्चजन्याख्यः कम्बुश्च धरण्या प्रादुरभूत् ।

व्यक्तै अभेद्यैः सहस्रवक्त्रै. रुचिर नित्यं मुरारेः प्रिय, मुक्तिद्वारं अहीशमुख्यविबुधैर्गीत तमिस्रापह दैत्यध्वंसि दिनकरोद्रिक्तं दिगन्ताततं मध्वसुदर्शनप्रतिकृति प्रोज्ज्वल कृष्णस्य सुदर्शनचक्र पृथ्व्यां प्रादृश्यत । कृष्णश्रैष्ठ्यसमर्थनेऽतिचतुरै. तद्भिन्नलोके भिदां नित्यं साधयितु क्षमैः मतिमाता अपि अच्छेद्यहृद्यात्मभिः विख्यातैः शरसञ्चयै सुरुचिरं भास्वन्मानसहस्रभाष्यसदनुव्याख्यानकल्पं निषङ्गद्वयं तदा प्राप्तम् । सद्वंशजातं सुगुणं मुकुन्दहस्ताम्बुजाधार अन्यैः अभेद्यं मानोपमानेषुभिः अन्यजिष्णु सतां वृन्द इव शार्ङ्ग आवीरासीत् । असौ कृष्ण भक्तौघस्य नन्दकं युधि द्विड्वर्गस्य दैन्यकरं नन्दक सञ्ज्ञितं असि उद्धतशत्रुविध्वसनं स्वजनहर्षकर सद्वादिनां समयं इव उररीचकार ।

[1] श्रुत्यन्त विश्रान्तानां शरौघानां युक्तौ (संयोजने) शूराः हरेः पक्षधराः अत्यूर्जितं पूर्वे वर्तमान शत्रुपक्ष जघ्नु । मुरान्तकस्य मुख्यवात [2] सञ्जातशङ्खमधुरश्रुतिरम्यशब्दे आप्यायिता हरेर्भटा. समरे शत्रून् निहत्य तां पुरी परित मुकुन्दगुणवर्णनेन शोभमानां चक्रु ।

---

(1) तत्ववादिपक्षे, श्रुत्यन्तविश्रान्तै वेदान्तसम्बद्धैः शरौघवत्कठिणै युक्तिभि शूरा वैष्णवा अत्यूर्जित मायाविना पूर्वपक्ष (जगत्सत्यं भेदः सत्य इत्यादि) सिद्धान्तं विधाय अन्ते उत्तरपक्ष मायावादि सिद्धान्तं जघ्नु ।

(2) मुख्यवायु मुख्यप्राण तदवतार मध्वाचार्यस्य शङ्खध्वनिवत् । श्रुतिरम्यै शब्दै ।

कृष्णाङ्गसङ्ग्युज्ज्वलशाङ्र्गजन्मा[1] सत्पक्षपातेन[2] गृहीतवेगः असौ बाण एकः अपि नानावदनैः समन्तात् युध्यन् मध्व. इव अस्ति। अय स्थिराप्त्या[3] अरिभटै असह्यः सुवर्णशोभी शुभवंशजन्मा दिगष्टक व्याप्ततनु बाणः आजौ समन्तात् मायाविनां निकामं जिगाय। आजौ नत्युद्यतानां नयवाक्यभाजां न्यस्तायुधानां निकुरम्ब हित्वा उद्धतानेव जयन् स बाणः पूर्णमत्याहृ्वयाहोचिरण बिभर्ति। पृथ्वीभुजां हृन्मध्या लयत निर्गततनुः सः बाण अच्युतप्रेक्षावाप्तमहोदय क्षितौ पवनवद् विख्यातवेगः सच्छास्त्रोदित कृष्णविक्रमचयं विख्यापयन् स्वर्गिणा सुप्रीतिं जनयन् मुरान्तकचमू पुष्णन् द्विष. अजैषीत्। अरिधृतैः शस्त्रै. अस्त्रगणैः शरैश्च कृष्णे वेधं बिभेदं छिदां च स्वागमकौशलैः परिहरन् स्वानन्द मात्राकृतिं निर्बाधां प्रतिपादयन्, अवयवान् नित्यांश्च विज्ञापयन् सः बाण. अगण्यप्रतापं प्रभु कृष्ण युधि अग्राह्यं अतीन्द्रिय च व्यतनुत। सः विशिखः[3] कृष्णस्य चमू हृष्टां वितन्वन्, दुष्टान् विनष्टान् विधाय व्योम चरैः सुरैः तुष्टः जिनारेः मुरारेः उत्तमतां स्पष्टीचकार।

असौ जरासन्धः पौराणिकं वाक्यमिव उग्रसेनं अग्रे जहास, स च उग्रसेनः आत्मयुक्त्या जीवेशयो. भेदमिव अस्य जरासन्धस्य चापे भेदं असाधयत्। सः कृष्णमुक्तशरः श्रीरमण (कृष्णधनुः) गुणोज्झित विधातुं यतमानं अरिवर्गं आशु गुणै विहीनं विरचय्य कृष्णं अनन्तसच्चिन्त्यगुण वितेने। सः बाण अन्धानामपि कृष्णस्य सद्गुणाख्यमणिं सन्दर्शयित्वा जगद्वन्द्या कृष्णस्य कीर्त्याख्यवधू लोकत्रये परेषां अनलसम सन्धाय,

---

(1) मध्वपक्षे—कृष्णालिङ्गितशाङ्र्गभिमानिदुर्गातिमकलक्ष्मीप्रभव।

(2) सज्जनेषु पक्षपातेन बाणप्रवर्तिकृष्णायसस्य स्थिराप्त्या। मध्वपक्षे—अये शुभप्रदे देवे हरौ स्थिराप्त्या दृढभक्तया। (अय शुभावहोविधि· अमर

(3) बाण, सन्यासित्वेन शिखारहित मध्वाचार्य.।

सान्द्ररक्तजले रत्नदृषदां वृन्दं च सम्प्लावयन् छन्दः[1] अन्वर्थं अलं समर्थ्य सुधियां सन्देहं आशु अच्छिनत् ।

सः बाण. शस्त्रास्त्रप्रकरेषु शाङ्र्गधरतः भेदं द्विप-अश्व-द्विपत्-वर्गेषु आत्तशरासनात् मुरभिदः भेद, विभिन्न गात्रेषु मृत्योर्लोकं इतेषु च स्वजनतः भेदं कायात् मिथ खण्डिते हस्तादौ च भेदं साधयन् भिदां पञ्चक व्यक्तं विदधे[2] । मध्वशिष्य परोक्तवाक्यै. स्वपक्षं आस्थाप्य विपक्षपक्षान् इव हरिभटा युधि अरिप्रयुक्तैः शरौघैः तैः तद्ध्वजिनीमेव निजघ्नु. ।

मुरारेः भटा. युधि ब्रह्मण. कृष्णस्य साक्षात्कृतेः लब्धं यत्तत् प्राणायोग–पलायन– प्रपतन–आघात– आर्ति– वित्तव्यय-स्वेद-अस्त्रोदय-वक्त्रनैरस्य–भय–दुष्कीर्त्यादि अखिल विश्व शत्रुचयेषु सत्यं चक्रुः । आत्मसु च तत्कृष्णसाक्षात्कृतेः सिद्धं तद्विपरीतं[3] विश्व सत्यं चक्रुः ।

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि ।
प्रेम्णा चिन्मयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते ।
सञ्जातोऽयमभूत् त्रयोदशमित. सर्गो मुदां स्वर्गिषु ।।

---

(1) अन्धाना कृष्णगुणमणिदर्शनात् 'अन्धोमणिं अवन्दत' इति वेदस्य कीर्तिबध्वा अनलसमत्वे 'योषितमाग्नि ध्यायीत' इति छन्दस रत्ना भरणाना रक्तेसप्लावितत्वात् 'ग्रावाणः प्लवन्ते' इति श्रुति वाक्यस्थ प्रामाण्य समर्थितम् ।)

(2) जीवेशभेद. जीवजीवभेद जडेशभेद जडजडभेद जडजीवभेद इति पञ्चभेदा ।

(3) प्राणायोगादिविपरीत ।

## चतुर्दशः सर्गः

कृष्णभृत्याः युधि शत्रूणां छत्र ध्वज चामराणि, चर्माणि, वर्माणि हस्तिनः अश्वा पत्तयः—एतदादि समस्त वित्त मखण्ड कृत्वा[1] अखण्डार्थ[2] अविद्यमान चक्रुः। कृष्णभृत्या युद्धे सङ्ग्राम कौशल्य ज्ञानेन उज्झितानां भग समलिङ्ग्य सुमूर्छितानां जरासन्धभटानां सिद्धा अविद्यां विज्ञप्त्य-भावाकृति एव विदधु.।[3] युद्ध ये जरासन्धपक्षीया युद्धाङ्गणात् अन्यत्र पलायनं विदधुः तान् नृपान् सत्कोटिषु विधाय अन्यान् युद्धाभिमुख्येन स्थितान् असत्कोटिषु सन्निवेश्य कृष्णभृत्याः सदसद्विभिन्न शून्यं प्रचक्रु. धानुष्कचूडामणयः ते कृष्णभटाः शार्ङ्धरात् ब्रह्मण. कृष्णात् विभिन्नान् हेयान् अपि गर्विणः तान् जरासन्धपक्षीयान् शत्रून् युद्धे आहूय स्वेभ्योऽपि भिन्नान् (छिन्नान्) विरचय्य नून निजघ्नुः। ते कृष्णसेवका. कृष्णस्य जये सति समन्तात् समुत्थिताभिः कृष्णादन्येषु अयोग्याभिः मुकुन्द मुख्यार्थपराभि. सुराणां ऋषीणा सिद्धानां च स्तुतिभिः अस्य मुकुन्दस्य अवाच्यभाव[4] समदूषयन्। गिरिशः य[5] बाह्यदृष्टया[6] भस्मीभूतमिव आरचय्य पुनः चित्तान्तस्थित त अनेकाननं[7] गिरिसुतागर्भे हि आर्पयत्।

(1) खण्डसहितं कृत्वा—छित्वा

(2) अच्छिन्नपदार्थं, मायावाद्युक्त अखण्डब्रह्म।

(3) सङ्ग्रामकौशल्यरहिता जरासन्धभटाः पराभवं प्राप्य मूर्छिता. भूत्वा बन्धूनपि न ज्ञातवन्त। एतेन अविद्या अभावरूपा एव अभूत्। भावरूप अज्ञान वर्तते इति अद्वैतिनामत तत्कृष्णभक्तैः निराकृतम्।

(4) लक्षणावृत्तिगम्यत्वम्।

(5) काम, विष्णुसर्वोत्तमत्वसाधकसमीचीनतर्कं।

(6) ललाटस्थलोचनेन, "त्व च रुद्रमहाबाहो मोहशास्त्राणिकारय" इति हरेराज्ञानुसार तत्सर्वोत्तमत्वप्रतिपादकतर्कस्यापाततः निराकरणम्। अत एव भस्मीभूतमिव इत्युक्तम् चित्तान्त स्थितं चित्तज कामम्।

(7) षण्मुखं, कामस्य षण्मुखावतारत्वात् आत्माश्रयान्योन्याश्रयचक्रकान वस्था केवलानिष्टापादनरूपेण पञ्चमुखं तर्कं।

विभु कृष्णः पञ्चावयवेषुं[1] अङ्गैरुचिरं[2] अग्रचतर्कोपमं तं कामं प्रद्युम्न त्वेन सृष्ट्वा तेन छन्दोबाह्यकुतर्ककल्पं एकलव्यं अजयत् । श्रितानां आत्मीयानां गति. सर्वशक्तिः सः कृष्ण. रणे क्षणान उज्ज्वलाङ्गै. सम अङ्गज (प्रद्युम्नं) समुत्पाद्य भवस्य अनुभावात् आगतां तत्पितृत्वप्रथा द्यति स्म। कृष्णभृत्याः युद्धे ईशस्य अपरोक्षसमकालं सकल तदिद शस्त्रताडनादिक द्विषत्सु जरासन्धीयेषु तदीयाशेषविद्यया अबाध्य प्रसाध्य स्वोपार्जित निखिलं शत्रुसम्बन्धिछत्रादिक श्रीशार्ङ्गपाणिचरणे समर्प्य महाप्रसाद समलभन्त । य जरासन्ध प्रथमं शौवीगदां कृष्णवधाय सम्प्रेष्य जराभिधानां स्वजननीं जघान, असौ आत्मोदित व्याहृतिहेतुना जात्युत्तरेणेव पराजितोऽभूत् । संगरे केचित् जरासन्धभटाः सवाद बभ्रुः किल ।[3] अपरे शरैः ताडिताः सन्त. अनुक्ति[4] बभ्रुः । परे भृत्याः कटकात् निर्यान्तः निजे जने निरुन्धति सति क्रुद्धा. विरोध[5] बभ्रुः ध्वस्ताः निज जनै असङ्गतिं[6] बभ्रुः सर्वे शत्रव जयैः न्यूनतां[7] बभ्रुः । सर्वे शत्रवहृतिभिः आधिक्य[8] बभ्रुः इत्थ तत् जरासन्धबलं अद्वैतिवत् पराजित

(1) पञ्चावयव (लता) बाणा ते एव इषव यस्य तर्कपक्षे प्रतिज्ञाहेतु उदाहरण-उपनय-निगमनान्यैव इषवः यस्य तम् ।

(2) अङ्गै करचरणादिभि सुन्दरं, व्याप्ति-प्रतितर्कप्रतिहृतिविपर्यया-पवर्यसानाद्यै अङ्गै रुचिर तर्कम् ।

(3) केचिन्माधवमासाद्य विजयस्वेतिचाब्रुवन् इति भागवतोक्त्या समीचीन वचनं दधु. विप्रतिपन्नप्रमेयाङ्गीकार सवाद । सवादाख्यनिग्रह स्थानम् ।

(4) तूष्णीभावोऽनुक्ति अनुक्त्याख्यनिग्रहस्थानम् ।

(5) प्रतिज्ञादीनां व्याघातलक्षण विरोधाख्यनिग्रहस्थान

(6) आकाङ्क्षितविरहोऽसङ्गति इति असङ्गत्याख्यनिग्रहस्थानम् ।

(7) उपादेयाना अन्यतमानुपादानं न्यून इति न्यूनाख्यनिग्रहस्थानमिति वादपक्षे ।

(8) आधिक्याख्य निग्रहस्थानम् । संवादानुक्ती विरोधासङ्गती न्यूनाधिक्ये च इति षडेव निग्रहस्थानानि मध्वसिद्धान्तरीत्या ।

मभूत् । शरौघैः सञ्चूर्णिताङ्गा , सछिन्नपादोदरकण्ठहस्ताः जरासन्ध भटाः असृगब्धौ निराकारमतस्य तावत् फलं अश्नन्तः इव विरेजु ।

स्वाङ्गेन आच्छादितशत्रुशौर्यतरणिः शाङ्ख्येन इन्द्रचापेनोज्ज्वलः श्रीदेवयाख्यविद्युत्वान्. अद्भुतरथरूपेण श्रीमत्समीरेण ईरित , काव्येषु उद्गीतकथः सः कृष्णाम्बुदः शरौघाख्यकरकावर्षैः राजन्यानां आनन पाणिपादाख्यकमलव्रातान् क्षणे अलावीत् ।

सन्मुसलः हलायुधः रणावनौ कठोर मृत्पिण्डसमान् रिपून् मुहुः समाकृष्य प्रचूर्णयन् शौर्यमनोज्ञबीजान् यशोऽङ्कुराश्च हि असाधयत् ।

तत. क्रुद्धः करधृतधनुः चैद्यः विभौ मार्गणगणान् वर्षन् विष्णोः प्रशिखैः विशिखैः ग्लानिमगमत् । तदा कोपेन उज्ज्वलितवदनाः पापान्धाः भूपाः कार्मुककराः सन्तः परमपुरुषं पावकं इव परीयुः । कृष्णोऽपि द्विषातां वक्षसि, मुखे ललाटे च लग्नैः लसितलाञ्छनैः चित्र पत्रैः शरैः स्वाध्याय-कीर्तन-सदूर्ध्वललामै. शून्यान् शोणितशोणगात्रान् राज्ञ.[1] तान् सार्थाभिधानकृत । मधुजित् कृष्णः माद्यन्त शिशुपाल एत्य शाङ्र्गच्युतैः सायकैः चापच्छत्रकिरीटकेतुरहितं कृत्वा शिशूनां प्रभु चक्रे । [2]बलरामश्च चूर्णितवाजिसारथिरथं मागध जरया सहितप्रायं कृत्वा तं आग्रहीतमपि प्रभोः कृष्णस्य वाचा मुमोच ।

दुर्मति सः मागधः पुनश्च तावती सेनां[3] सम्पाद्य मधुरापुरी विधुरीकर्तु यमुनायाः परं पार उपागमत् । सः मागधः जरासन्धः पुण्य नद्याः यमुनायाः तीर उपव्रज्यापि बन्दिभि गीयमान सन् आत्मानं अमूमुदत् । सा हि विमुग्धानां प्रकृतिः । भास्करः कुहकस्य तस्य जरा सन्धस्य मधुरां नाशयिष्यामीति कुबुद्धि अभिवीक्ष्य कुपितः तदुद्योगस्य विघातार्थमिव[4] अपीपदत् । अथ निशाचरबलान्तकः शौरिः उष समये

(1) प्रजारञ्जनरूपार्थासम्भवेऽपि रक्तरञ्जितगात्रत्वेनैव राजान बभूवुः ।

(2) शिशुवत् निश्चेष्टं चक्रे ।

(3) त्रयोविंशत्यक्षौहिणी ।

(4) पुनश्च स्वोदयपर्यन्त विघातार्थं ।

सविता इव[1] स्वीयै सह रथं आरुह्य युद्धार्थं निर्ययौ। अमेयविभव. राजीवनयनः हरि राजनीति प्रकटयन् स्वीयाग्मर्नाकिनी त्रिधा अयूयुजत्। उदयशैलमूर्ध्नि लसता सूर्येण श्रीपते. शौर्योन्नतिं प्रकटयन्, अम्बुजैः तत्क्षणेन पोष्याणां यादवानां उदयं प्रकटयन्, ध्वस्तैः सन्तमसैश्च तामासानां जरासन्धभटानां दशांप्रकटयन्, नीडे क्वणद्भिः खगै. परवैभवं प्रकटयन् सः मुहूर्तः मुदे स्यात्। त्रिषुस्थानेषु विस्तीर्णा[2] मधुसूदनवाहिनी त्रिपदा वेदमाता गायत्री इव रिपुसेनां क्षणात् अहन् हरेर्भटाः अमतेषु शस्त्रातं त्रिदशाधीशाः खलेषु ज्वलत्तापत्रयं यथा अमूमुचन्। शत्रोः जरा सन्धस्य ध्वजिनी यमुनातीरगा अपि प्रमत्ताभूत्। असता पुण्यसरिदप्य निष्टस्य हि कारणम्। स. कृष्णः जरासन्धस्य तत् चतुरङ्गसैन्यं अपारैः शरैः पूरयन् मम इषुवारिधे. तव सेना नाल इति शसति। मुरजित् रणेधुरि दोष्णा शाङ्र्ग बिभ्रत् दोष्णा निषङ्गान्निशितशरचयान् आद दानः दोष्णा ज्यां आकर्णान्तं मुहुः विकर्षन् दोष्णा प्रबलरिपुवपुः मार्ग णौघैः पूरयन् दोष्णा अन्यातङ्कं स्वशंख रणयन्, दोष्णा अघ्रिमूले नातानां अभय तन्वन् च स्वां विश्वतःपाणितां प्रथयति।

ये द्विषः भास्वदुदये सन्ध्यासमयेऽपि निद्रा अचीकरन् शुभकृतेः साक्षी अच्युतः तेभ्य. सुदीर्घा तां हि निद्रा आदीदिशत्। यैः कुमतिभिः रवेः ईक्षा न कृता तेषां द्विषा दृश अमीलयत्। ये शुद्धाम्बुनि नो ममज्जुः तान् अहितान् तेषामेव (शत्रूणा) शोणिते अमज्जयत्। युधि जीवानां त्रितयेन सञ्चितदशां सन्दर्शयन्तः कतिपये वैरिभटा. आत्मेशितुः कृष्णस्य पादाब्जे स्वं मूर्धानं अनीनमन्। केऽपि शाङ्र्गात् मुक्तशरैः विशीर्णतनवः सन्त. आत्मनः अमीमरन्। अन्ये केऽपि हरिं जरासुतमपि त्यक्त्वा ततो युद्धाङ्गणात् दुद्रुवु. वीरशिरोमणिः यः हरि. मागधस्य[3] साधर्म्यं मापन्नानपि नावधीत्। सः कृष्णः मागधवधं हीन मेने।

---

(1) सविताऽपि निशाचराणा चोर-उलूकादीना बलान्तकः।

(2) अग्रे, पार्श्वद्वये च।

(3) स्तुतिपाठकस्य।

अरिन्दमः सः हरि इत्थं आजौ उग्रसेन त बार्हद्रथं जरासन्धं बहुवार विजित्य अब्धिमध्ये हिरण्येन अमलरत्नैश्च चित्र पुरं अचीकरत् ।

अथो अपरिमेयशक्तिः अरिघ्न कृष्ण. तस्यां द्वारावत्यां मधुरा पुरीस्थान् निजान् क्षणेन विधाय यवनं दिधक्षुः सन् स्वभक्तस्य मुचुकुन्दाख्यस्य हर्यक्षस्य दरी प्रति विदुद्रुवे । पराङ्मुख· सन् खलस्य कालयवनस्य अग्रत· पलायन् असौ परमः कञ्जदलायताक्ष कृष्णः दुरात्मनां वक्त्रनिरीक्षण स्वै.जनै तु न कार्यमिति शसति स्म । अध्वनि तेन यवनेन अधिक्षिप्तोऽपि अदत्तोत्तर ईश्वरः सतां असद्वर्गै समं असल्लापं संशिक्षयन्निवाभवत् । निद्रालोः मुचकुन्दाख्यभूवरमणे विद्योत मानां गुहां अध्यासीनं अल्पमतिभि. अगम्य शुद्धं स्वत. प्रबुद्धं कृष्णं– हृद्योमास्थितमुग्वजीवनिकरात् ब्रह्म अभिन्नं वदन् अद्वैतीव– सः दुर्धीः असुरः यवनः नृपात् मुचुकुन्दात् भेदरहित बुध्या अन्वमंस्त ।

कृष्णे मुचुकुन्दस्य ऐक्यं यदि सिसाधयिषितंस्यात् तर्हि किमर्थं मुचुकुन्दराजे अच्युतमतियुत रक्ष यवन शुकाचार्य. न सेहे ? अर्हणीयः शुकाचार्य. 'अह अच्युतः' इति विघोषयन्तं पौण्ड्रक कस्मादगर्हयत् ?

मुचुकुन्दहृत्सरसिजातभानु. मुकुन्दः भूपते. तस्य नयनाग्निना यवनाख्यं कानन प्रदाह्य पुन. मुचुकुन्दस्य भवाख्यं गहनं स्वपदपद्मवीक्षाग्निना विनाश्य शनैः जलधिमध्यरत्नायिता आत्मन पुर द्वारावतीं इयाय ।

अम्बुजेक्षणे कृष्णे निजै. सह द्वारवत्या निवसति सति कश्चिद् द्विज अजया रुक्मिण्या प्रेषित पत्रं उपाहरत् ।

<u>रुक्मिणी प्रेषित पत्रम्</u>. या अबला विभवे साम्ना वेद्याय, साम्नायैः शास्त्रै. उदितस्य धर्मस्यपात्रे, पात्रेषु दत्तवैकुण्ठाख्यापदाय भूम्ने पुरुषाय कृष्णाय दत्ता सा धन्या भवेत् ।

हे अङ्गजानां आकृतिशतात् ऊर्जितरम्यरूप, हे देहिनां अङ्गजातनिलय, कृष्ण, कामवशगाः त्वत्तः अन्ये शिशुपालादय· मयि चित्त

कुर्वन्ति । तान् रणे अन्तिकागतयमानुचरान् कुरु । त्वदङ्घ्रि सरोज सेवां च मे देहि । भव-ताप-हर-अपाङ्ग कृष्ण, भवता मम धी. अपहृता एव । तव चरणाङ्कैः कृताङ्कां मां च रणाङ्गणतो नय । भवघ्न, प्रभो, अङ्ग कृष्ण भवत. सूक्ते[1] आसक्तहृत् अहं उमेशहसगमनौ, स्वर्गीस्वराग्नी अखिल लोक देवौघमान्यान् मुनीन् सच्छास्त्राध्वनि कोविदानापि बुधान् धिक्कृत्य यत् त्वयि एव सस्पृहा अस्मि तस्मात् भवत. विश्वाधीश्वरतां निश्चनोमि । प्रभो शम्भु मम पुत्रसमः, पुर रिपु. सः पौत्र·, शशो सोदर, सिन्धुर्मे जनकायितः । मधुसखः मन्मथ. मत्सूनुकल्प. । अह सकलस्य अम्बा । इति कमला मनोभृङ्ग कृष्णैक लग्न दर्शयितु कृतोग्रशपथा इव स्व रूपमस्पष्टयत् । हे वीराग्रग यदुपते, ते यत् विश्वविदित अनन्यग अच्युतनाम अस्ति । तत् नित्यानन्दचिदाकृति त्वामेव पति मन्ये । तदच्युतनाम यदि चिन्मात्रसमीक्षया चेत् सर्वेऽपि कि नाच्युताः ? यदिचैतत् चिरकालसंस्थिसिकृतं स्यात् तर्हि तव पुत्रेऽपि ब्रह्मणि तन्नामस्यात् । हे अङ्ग यत् अन्ते प्रलय समये अशेषं जगत् आत्मगर्भे बिभ्रत् अभ्रद्युतिः त्व शेषे शेषे । तत् आनन्दसान्द्राकृति अच्युत श्रीशं त्वा ईशं वरयामि नान्यम् । दशावृति[2] इद पद्मजाण्ड अनेकधा यस्य रोमकूपे पराणुवत् तिष्ठति किल । अङ्ग, तस्य तव देह कथं पञ्चभूतभवः स्यात् ? हे लोकनाथ स्वानां आपत्–छिदापादनविक्रमौघ, त्व गोपीः अगोपी किल । हे विभो,दयावारिधे एवं वञ्चितदुर्दशां मां स्वीयां विधेहि । अन दिसिद्धां तव जायां मां नयतः ते रुग्मिणा किम् । भीष्मकेण किम् नृपसंज्ञितै. अन्यैर्वा किम् प्रयोजनम् ? ईश, अन्यजनै. अभोग्यां त्वदंघ्रियुग्मार्चनकर्मणि योग्यां मां नय । नो चेत् इमां अवस्थां अवधूय भूम्नः तव हृदयस्य योग्या भवामि ? हे सौन्दर्यसमुद्रसान्द्र, असुनाथ, मुकुन्द, आश्रितायाः मम

(1) रुक्मिणी वरयामीति नारद प्रति उक्ते तव समीचीनवचने, अंभ्रणी सूक्ते ।

(2) दश आवृता यस्य तत् । आदौ पञ्चमहाभूतानि, तदुपरि अहकार तत्व महत्तत्वं गुणत्रय चेति दशावरणानि ।

त्वदीक्षण दिश। न चेत् दिशासु वसन्ती सती अहं याः स्त्रिय गोप्य क्षण त्वां आश्रिता. तदीयभाग्यस्य नाथे। अन्तस्त्वदैवय स्मरता जनानां दैत्यजुष्ट अनिष्ट भवति किल। तत् त्वदेकपत्नी मां अभिकांक्षत तान् इमान् शिशुपालादीन् त्व उपेक्षितु नार्हसि। अङ्ग कृष्ण, त्व स्वतन्त्र लक्ष्मीरमण। अह त्वदीयजाया कमलाऽस्मि। मदर्थितायाः छलोऽसज्जनानां शिशुपालादीना अभिमानहानि विधत्स्व।

इति तं पत्रगतालाप गः माधवः आलोच्य रथ आरुह्य यत्र सा प्रिया रुक्मिणी तत्र तरसा प्रतस्थे। कमलेक्षण. अच्युत भीष्मकन्यायाः रुक्मिण्या सन्देश सन्दृश्य मन्दस्मितमुख. सन् दयया त विदर्भाख्यदेश अगच्छत्। यस्मात् कृष्ण. तस्याः वचनमात्रेण हृत (परवश) अपि सदय. सन् करपल्लवेन पत्रानेतु. ब्राह्मणस्य हस्तं प्रत्यग्रहीत्। तस्मात् आश्रितपक्षपाती एष हरि भैष्मीकरग्रहणं करिष्यतीति वक्तव्यमस्ति किम्?

तदा पद्मोदयाय[1] उद्यन्मरीचिशतैः भासितसर्वदेश निशाचरधूक शोक[2] पुष्णन् गच्चक्रमानितगति[3] दिनराट् इव सः कृष्णः पूर्वसिन्धोः उपकण्ठे हि लसास।

कृष्ण दुष्टौघैः जरासन्धादिभिः पूर्णां विदर्भनगरी प्रवेष्टु अनिच्छिन् बहिरेव हि वास चक्रे। तदीक्षणोत्सुकैः नागरिकैः वृता सा स्थली तां पुरी अजयत्। सदारा. ते पौरा तदा उपायनपाणय. सन्त सौन्दर्य समुद्रमान्द्र त शौरिं आलोक्य अपरान् वीरान्[4] उपेक्ष्य अपार्थान् प्रचक्रुः किल।

"श्यामलकोमलाङ्गः अय न स्मर., वीतकलङ्कशङ्क नाय शशी। लोकदृगार्तिहारी नाय रवि, सोऽयं अद्वितीय पुराण. पुरुषः नारायणः। मनोज्ञा भीष्मसुता सा रुक्मिणी श्रीरेव। सुभगाग्रगण्योऽय

(1) पद्मानां उदयाय, पद्मायाः कमलायाः उदयाय।

(2) निशाचराश्चते धूकाश्च। कृष्णपक्षे निशाचराः धूकाः इव।

(3) चक्रवाकैः मानितगतिः। सता चक्रेण मण्डलेन मानितगतिः।

(4) शिशुपालादीन।

श्रीवल्लभ । एतौ समेतौ भवताम्" इति ते नागरिकाः आत्मेष्टदं धातार अर्थयन्ते । "पुरुषाग्रगण्यः सोऽय कृष्ण. नः पुण्येन एणदृश्याः रुक्मिण्याः करं गृण्हाति तदा नीलमणि स्वर्णसमेत मन्यामहे । अन्यथा चेत् लोहं समेत मन्यामहे ।" इत्थ वृन्दशः गृणन्त. ते पौरा· मुकुन्द नत्वा नयनैः पपु , कृष्णोऽपि मुग्धस्मित· सन् तान् सर्वान् सदयावलोकै· अञ्जसा अरञ्जयत् ।

अथो पौरा. रुक्मिण्या सह चलत्पताकोज्ज्वलचामरौघा परिस्फुरच्छत्रसहस्रशोभा विचित्रतूर्यध्वनिपूरिताशा कुलदेवयात्रां वितेनुः अथ सा भैष्मी स्वजनकस्य गृहदेव पौत्र शिव आराध्य निजं गृहदेव माधवं द्रष्टुकामा सा पुरं अभियान्ती अपि प्रियचरणसकाश तेवनेन व्रजन्ती रथ नारुरोह ।

अलसेन विलसता अक्षिणा स्तम्भितान्याक्षवृत्तिः जलजानां कुल-जेन गन्धेन सह स्पर्धिना सौरभ्येण सान्द्रा[1] वदनमदनशस्त्रा अगण्येन लावण्येन चित्रा गजगतिः भीष्मपुत्री रुक्मिणी अजतात एन कृष्णं ऐक्षत । 'मम जननी इयं रुक्मिणी कृष्णेनैव नेया इत्युत्सुकः तद्रुक्मिणीदृष्टिजन्मा स्मर एव आत्मशरै. सकलान् नृपालान् नूनं मूर्छावशान् अकार्षीत् । तदनु भूपेषु मदनेन मन्दीभूतचित्तेषु सत्सु अविदितगतिः स्वतन्त्र. कृष्णः प्रहर्षात् उद्यद्रोमराजि विकसितयोः नयनाब्जयोः उद्भूतहर्षाम्बुधारां स्वां रुक्मिणी निजरथं अधिरोप्य प्रपेदे ।

लक्ष्मीरमण· कृष्णः इन्दिरायाः पुनः[2] विवाहेन किम् ? इतीव अपाङ्गाख्यया दूत्या विनिवेदितात्ममनोनुरागां तां सुयोगामतनोत् । कृष्णस्य आस्येन्दो. समीपे लग्नमुदितभ्राजत्कपोला, प्रभोः हस्ताम्भोज युगेन वेष्टितलसन्मध्या भिया इव अञ्जसा भर्तुः असद्वये सहितायत भुजा मोदाम्बुधौ मग्नधीः सा रुक्मिणी इमं विवाहोत्सवं पाणिग्रहणात् अधिकं मेने ।

---

(1) अनेन भैष्म्या पद्मिनीत्व द्योत्यते ।

(2) विधिसहितविवाहेन ।

रोम्णां हर्षणकारिणि श्रवणत पापौघविध्वसिनि ।
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते ।
सञ्जातोऽयमभूच्चतुर्दशमितः सर्गो मुदां स्वर्गिषु ।।

---

## पञ्चदशः सर्गः

कृष्ण रुक्मिणी रथे आरोप्य गच्छति सति मदनवशगाः मानिनः महीशाः विषमात् मृगदृशाविरहयोगरोगात् पुरस्तात् स्वतनु उज्झितु इव तं कृष्णं तमः तरणिमिव अन्वधावन् किल । ये भैष्म्या. परिरम्भण चकमिरे तेषा द्विषा भुजान् हरिभटा खड्गरे चिच्छिदुः । ये वा तस्याः मुखस्य चुम्बनरुचि चकमिरे तेषां शिरांसि चिच्छिदु । खला ये राजानः लोकाम्बया तया रुक्मिण्या सह तल्पे शयनं चकमिरे दुर्मदान् तान् हरिभटाः सयकैः प्रेतै. सार्ध अशीशयन् ।

शम्भोर्दयिता पार्वती तस्य शम्भो. वैरिणः कामस्य मातुः रुक्मिण्याः साहाय्य क्व चकार ? सः विप्रयोगोऽपि वा देव्याः श्रीपति-विप्रयोगं कथ अहरत् ? किन्तु सः श्रीपतिरेव स्वविरहायोग्यां सम-व्यापिनी तां अश्लेषकथा खलैः सह मुहु. शिक्षन् श्रुति रक्षन् निन्ये । सुग्रीवोद्धतसैन्यमात्रबलवान्[1] श्रीपूर्वराम. सः कृष्णः युधिहतै. गजादि

(1) तुरगा सैन्य-सुग्रीव-मेघपुष्यबलाहका इति वचनात् । सुग्रीव सैन्य इतिरथाश्वौ । सुग्रीवश्च उद्धतसैन्यश्च सुग्रीवोद्धतसैन्यौ केवलौ तौ तन्मात्र तदेवबल अस्य अस्तीति सुग्रीवोद्धतसैन्दमात्रबलवान् कृष्ण रामपक्षे– सुग्रीवाख्यस्य कपे उद्धतसैन्यमात्रबलवान् ।

निकरैः रक्ताम्भोनिचये सेतु आबध्य तस्यां रुक्मिण्यां लग्नचित्तं खलं प्राक्तनरावण शिशुपाल जित्वा निजां अव्यग्रवक्त्राम्बुजां प्राचीनांवनिजां रुक्मिणी निनाय । हरेः विक्रमार्कोदय सति कश्चित् भटः अहयी[1] अहयीत्[2] । अपरः अच्युत अनसीत् । शरैः विद्धः सन् अपरः नाक्रमीत् । उन्मुखशिखे स्वीये प्रतापाख्ये अनले शत्रुसमूहं हुत्वा, शराख्यैः भ्राजद् द्युतिश्रेणिभिः रक्तरसार्द्रतामपि कृत्वा स्ववासिभिः देवैः प्रेषितैः पुष्पाख्यैः लाजनिकरैः आकीर्णः तत्समयोचितैः क्षितीशार्पितैः वित्तैः सह निसर्ग प्रियां निजां रुक्मिणी श्रीहरिः निन्ये । उरुबले कृष्णे स्वां दयितां नयति सति भूभुज तस्याः रुक्मिण्याः बन्धूनां योग्यां दशां आपन्ना इव अन्वागताः अन्तकपुरी गताः वै । अन्ये खिन्नमुखाः दृगम्बु ससृजुः । केचिच्च मूर्छां श्रिताः, चैद्याद्याः मलिनाननाः गतगिरः दुरन्तां चिन्तां ययुः । रिपूणां वाहिनी कृष्णः तत्सेनाऽपि वा न जघान । सा वाहिनी जनन्याः रुक्मिण्याः द्रोहकृतः चैद्यस्य पक्षपातेन हता ।

सः रुग्मी रुग्मीव[3] यदा विरोधं चक्रे तदा चक्रधरः देवः तस्य रौग्मं धनुः छित्वा भविष्यदुद्योगं उत्थापयति स्म ।[4] शचीपतिस्तुत्यकृतिर्मुरारिः त रुग्मिण मुण्डितमूर्धजं अचीक्लृपत् । लक्ष्मीः यद्गेह उपेक्ष्य अगात् तत् एतत् खलस्य हि अनुगुणम् ।

अनन्यकान्ता चञ्चललोचनान्ता सा रुक्मिणी सहस्रसंख्याकानां अवनिपालानां भङ्गन समुत्थिताभिः जयकामिनीभिः आत्मदासीभिः सह जगाम ।

तस्य कृष्णस्य योधाः जयकामिनीजनयुताः धैर्योर्जिताः गर्जन्ति । तुरगाः युद्धाप्ताः वडवाः निरीक्ष्य हेषां मुहुः तन्वते । हस्तीन्द्राः करिणीः समेत्य परितः बृंहित कुर्वन्ति । अहो भक्ताभीष्टकरः हरिः पुरा एव[5] स्वीयान् सजायान् व्यधात् ननु ।

---

(1) हयरहितः ।

(2) गतवान् हयगतौ इतिधातु । तुरगादवरुह्य पलायितवान ।

(3) धनवानिव ।

(4) अक्षय्यधनु प्राप्त्यर्थं शिव प्रतितपःकरणाय ।

(5) स्वविवाहात्पूर्वमेव ।

हयहस्तिरथोपेत प्रियया रुक्मिण्या सहित. जलजायतलोचन: कृष्ण: अलङ्कृतां निजपुरी द्वारकां अविशत् ।

अथ यथाविधि वैदर्भ्यां रुक्मिण्या: कर जिघृक्षु शरण्य कृष्ण: प्रियया बन्धुभिरव सार्ध मूलमाधव उद्यानं प्रययौ ।

कृष्णेन कृतरम्यशोभा द्वारावती मुरारे: अभिमुखे उभयभागयो: हेम्नां उल्लस कान्त्याख्यनाञ्चलेन द्वारिगच्छन्तं त आस्थापयतीव अभूत् । सा द्वारवती कृष्णे बलाद् प्रजनि सति तस्य मन्दहासाख्यया नवचन्द्रिकया स्रवद्भि: इन्दुकान्तै अश्रुधारां उद्गलवचोरभसा तस्य सैन्यस्य सम्भ्रमेण समुत्थै: रजोभि: आस्यमालिन्य च बभार । तदनु दीना सा द्वारवती स्फुरत्सु आत्मवप्राग्रनरत्ननिकरेषु भर्तु: कृष्णस्य प्रतिकृतिं निधाय तस्थौ इवाभूत् । अथ स्वयं अच्युतस्य भूषणेषु फलिता विश्लेषशङ्किहृदया सती ईशं अनुययौ इव ।

चलतां पताकानां अनिलै. निर्मलीकृते, रथौघानां चक्रावलिभि: समीकृते– सुरालिमुक्तै: अमलै: पुष्पै: लञ्छिते, गजेन्द्राणां दानाम्बु कदम्बै सिञ्चिते, वराङ्गनावारोच्चयेन सूचितै: इतस्तत मण्डलधावनोद्यतै: परिस्फुरद्भूषणचामरोज्वलै: हृषितभूषिताननै. हयै विराजिते, कलशोपमानै: पार्श्वद्वयस्थाना इभाना कदम्बस्य रङ्गिकुम्भै. समेते, नीलोत्पलतोरणाभै अन्योन्यासक्तै उन्मुखै. कुञ्चिताग्रै शुण्डै: समेते, विचित्ररत्नोज्ज्वलभूषणोर्वै प्राङ्गणि नाङ्गनानां पदाम्बुजै. रङ्गप्रभां मुष्णति राजमार्गे मन्मथकोटिरूप. कृष्ण: मन्द ययौ ।

मध्ये स्थापितमाधवा स्मितलसत्फेना चलच्चामरव्राताख्यै. ऊर्मिभि: वितता आतपत्राख्यकमठवती हस्त्यश्वपत्त्यावृता वीणावेणुनिनादाख्येन गर्जितेन युता आच्छन्न-अनिमिषा अन्तरागतमहीपालौघसेनासरित् वार्धे. समा सा कृष्णस्य चमू मन्द ययौ । लक्ष्मीशवाह-रथ-हस्ति-भटौघवेगात् जात: आत्तरय त्रिदिवं व्रजत् तत् रज. कृष्णानुषङ्गिन: चित: अचेतनस्य च सङ्गभाज. पुस. गतमेघसोऽपि त्रिविष्टपगति वक्ति । सिन्धु स्वतीरे विचित्ररत्नद्युतिरङ्गकान्त्या सुमौक्तिकौघाख्यया

अक्षतलाजराज्या मन्दानिलव्यजनेन च स्वजामातरं कृष्ण अर्चतीव भासते । तुङ्गै धृतशङ्खचक्रै तरङ्गै पय. कीर्ण वितन्तन् वार्धि ब्रजत मुरारे. अधिमार्ग हस्तैः वस्त्राणि विस्तारयतीव । नीलाश्मद्युति-पत्र शोभिभि., अधोव्यालम्बिपुष्पस्फुरन्मुक्तादामभिः, उल्लसत्किसलयश्रेणी वितानोज्वलैः, सिन्धुप्रेषितरत्नसंहृततलै सुवर्णोन्नतस्तम्भभाङ्गै मणि-मण्टपानुकृतिभि समानायतैः वृक्षै. युक्तं मूलमाधवाख्यं वनं श्रीहरि. अविशत् । अथ कृष्ण विष्वक्लम्बिफलोच्चयं, कलपिकैः आरब्धगीतं, गर्जद्वारिधिमर्दल, शुकवचःस्तोत्र, स्वतन्वीक्षया नृत्यत्केकिनटीभिः मनोज्ञं, अलिगीर्वीणानिनादं, पतत्पुष्पौघाख्यैः अक्षतलाजवृन्दैः सहितं माङ्गल्यवेश्मोपमं मूलमाधववन अविशत् । यत् तत् वन इन्दिरायाः प्रियाङ्गसंश्लेषमहोत्सवश्रियः मूलं अभूत् । तत. स्थलज्ञाः आर्याः भुवि तत् स्थलं मूलमाधवं प्रवदन्ति नूनम् ।

केचन सदाराः नृपाः भीष्मपुत्र्याः पक्षे, अपरे मुरारेः पक्षे आसन् । तदा वार्धिः वारिजाक्ष्याः रुक्मिण्याः पक्षे अहमेव इति वदन्निव उच्चैः गर्जति ।

अथ रत्नौघैः पूर्णे रविवर्णे सुवर्णपात्रे सत्कर्णपत्रमुख शोभनवस्तु राशिं विस्तीर्य शङ्खपटहध्वनिभिःपूरिताशाः सन्त. वरपक्षीया. उत्सव निर्णयाय वधूगृह जग्मु ।

तयोः कृष्णरुक्मिण्योः विविच्य सर्वाङ्गविचारकाले[1] समन्तात् घटना आसीत् किल । पर देवश्य सुपीने स्तनमध्यदेशे अच्युतस्य सा घटना सुदुर्लभा आसीत् ।

वर पक्षीयाः– कनकदामवत् कदम्बवच्च गौरी धन्यां इमां कन्यां हरिनीलभासे हरय भवन्तो दिशन्तु । तया युक्तः अयं कृष्णः आत्त विद्युत् उदवाह. इव विष्वक् समस्तपुमर्थवर्ष करिष्यति । सती इयं वैदर्भवंशोदधिजातरत्नम् । सोऽपि कृष्णः उडुनायकस्य कुलोद्भवा-

(1) विवाहाङ्गाना राश्यादिकूटाना, हस्तमुखाद्यवयवानामितिध्वनि ।

लङ्कृतिः । तस्मात् एतयो. परपरायोग्य योग अवेत[1] । पावनाङ्गी सा भीष्मा पद्मालया । नवनीरदाभ अय नारायणः । तेनानयोः योगं सुस्थिरमेव मन्यामहे, अन्योन्यविभूतिहेतु च मन्यामहे ।" इत्याहु । कन्यापक्षीयाः– "आर्यः कृष्ण स्वभार्यां भारकार्ये यदि नैवोपदिश्यात् । पुनः कदापि एनां न त्यजेत्, अत्र जात्वपि न कुप्येत् तर्हि स. न अब्ज मुखीकर गृण्हातु । विभो, हरे, विश्वदः त्वं अस्माकं सन्देशमात्रमभिवीक्ष्य एनां नः गृह्य यदि सम्प्रेषयिष्यसि, अन्यपत्नी यदि न करिष्यसि, बन्धून् अस्मान् यदि स्मरिष्यसि तर्हि वल्गुवदना इयं वरिष्ठ त्वां वरयेत् ।" इत्यवदन् । वरपक्षीयाः– "साध्वी इयं रुक्मिणी हरेः चतुर्दश लसत्प्रासादशोभं ब्रह्माण्डाख्यगृहं, तन्मध्ये गृहस्य उचित स्वर्णाद्रिः क्षिति धान्यानि, रत्नानि, लवण-क्षीर-इक्षु-सर्पि-दधि स्वादूदादिसमुद्रा , इत्यादि वस्तुजातं पद्मजमुखान् सुतान् तेषा धुर मन्दिर च सततं विचारयतु । एतत् गृहकृत्य गृहिण्या रुक्मिण्या कार्यम् । एतत् भारकारि नो । अन्य जनैरसाध्यं तदेतत्सकल तन्वी इयं स्वलोललीलाकटाक्षेण करिष्यति ।

कृष्ण· एनां ससदि न त्यजेत् । रहसि, स्वैरावतारेषु वा स्नानाभ्यजनभोजनादिविविधक्रीडासु न सन्त्यजेत् । विभूषणगतं स्वाङ्गाश्लेषसुखं वंशाद्याश्रित बिम्बाष्ठज अमृत च अस्यै दिशेत् । पर एतया विरहित देशं सन्त्यजेत् ।

अय कृष्ण सर्वभुवनाय क्रुद्धोऽपि भीष्मपुत्र्यां क्रोधं न करिष्यति । परं तदाऽपि[2] कोमलाङ्गी एनां दोर्भ्यां परिरभ्य रमयेत् किल । य इमां वियुक्तां कलयेत् तत्रैवास्य कोपः ।

(1) एतत्कुलमूलयो समुद्रचन्द्रयो सहजमित्रत्वात् परम्परायोग्ययोग अथवा समुद्रजातत्वात् लक्ष्मीत्व, सोमकुलोद्भवाना पुरुषाणा अलकृति इत्यनेन पुरुषोत्तमत्व उक्तम् । अत लक्ष्मीनारयणयो परम्परायोग्ययोग ।

(2) प्रलयेऽपि ।

स्वपुसां दयित स अस्या: केशं प्रगृह्य, करजै कुचकुम्भपार्श्वे व्रणानि कुर्वन्, मुदुकोष्ठपुटं दशन् दन्तक्षतं विरचयेत् तदा क्रोध न कलयध्वम् । असौ विलास: । स प्राय इमा स्वभक्तगेहेषु न प्रेषयति । तेऽपि तां न लभन्ते । अय प्रदतागपि तामिमां लक्ष्मी धीरा भक्ता. यूय परावृत्य न कि दिशध्वम् ? पूर्ण पुरुषग्रणो: अय हरि: अन्यां न वरयेत् । वृतोऽपि अन्याङ्गनादेहे इमा प्रेयसी रमयेत् । सदा अपरोक्षी कृतसर्वविश्व. स्मरणीयशील: स कथ युष्मान् स्मरेत् । तथापि स्वांघ्रि युगाश्रयेषु युष्मासु स्मृते: फल कृपां कुर्यात् ।" इत्यूचु ।

कन्यापक्षीया – "अस्मै कृष्णाय बहु पारिबर्ह रथाश्वहस्त्यादि बलानि च दातु न वयं ईशा. पर पद्ममुखी इमां दिशाम: । निथिज्ञमाहूय तिथिविचार्यताम् ।" इति प्रत्याहु

वरपक्षीया – "पूर्णसुख. स पारिवर्ह न वृणोति । परं तस्या: कटाक्षं कांक्षति यत विरिञ्चशर्वेन्द्रमुखामराणां अगण्यभाग्यं हि सदा बभूव ।" इति प्रत्यवदन् ।

[1] प्राज्ञा: ययो. वक्त्रे विधु[2] आमनन्ति । मुग्धस्मिते सुबुध[3] आमनन्ति हस्तयो. उद्यधोममर्ण[4] आमनन्ति । कटितटे गुरु[5] आमनन्ति । मध्यं च काव्यास्पद आमनन्ति ।[6]

---

(1) रुक्मिणीकृष्णयो अवयववर्णनव्याजेन पञ्चाना शुभग्रहाणा मुखाद्युच्च स्थानस्थितत्व चतुर्णामशुभग्रहाणा पादाद्यधरस्थानस्थितत्वच वर्ण यन् शुभाना पञ्चग्रहणा उच्चस्थानस्थितत्वे अशुभाना नीचस्थान स्थितत्वे सुमुहूर्तत्वस्य ज्योतिशास्त्रप्रसिद्धत्वात् सर्वा तिथय अनयो रुक्मिणी कृष्णयो अनुकूला इति प्रतिपादयति ।

(2) मुखस्य चन्द्रोपमत्वात् ।

(3) मन्दस्मितत्वेन अल्पप्रकाशबुधसादृश्यम् । अथवा तयो: मन्दस्मिते सति सुबुधं सम्यक् ज्ञानिनम् । यमुद्दिश्य कृपया मन्दस्मितं कुरुत स ज्ञानी भविष्यतीत्यर्थ

यत्पादस्पृशि मङ्गलं आमनान्ति[7] ययोः पदतले केतु[8] गतौ मन्दगं यद्रोचिश्चकित तम[9] आमनान्ति तयोः अनयोः रुक्मिणीकृष्णयोः नित्यं मुहूर्तोदयः ।

यदीयवीक्षाविषयस्य[10] नित्य विधोर्बलं, यदीयतारं[11] जपतः पुस सुष्ठु तारबल[12]चास्ति तदस्य कृष्णस्य सदा मुहूर्तोदयमेव मन्ये ।
ज्योतिष्पथज्ञै उक्ता सा तिथिः द्वित्रै दिनैः अन्तरिता अपि उद्यन्महर्धि मिषतां जनानां क्षणाभा अभूत् । भैष्म्याः तु कल्पायुतसम्मितासीत् ।

पूगयुक्तं ताम्बूलपत्रं विवाहोत्सवस्य निर्णयाय आसीत् किल । एतदेव यूनां चेतस्सु माङ्गल्यदीक्षोत्सव निश्चाययति स्म । ततः क्रमेण उभयवर्गनार्यः विवाहोत्सवमूलभूतां तैलयुतां हरिद्रा गृहे गृहे परस्परं स्नेह अर्पयन्त्यः इव ददु । अभ्युदयार्थकामौ कन्यावरौ अन्येद्यु पितृ देवतानां अर्चा चक्रतुः । अह तु अमू तदग्रे अन्योन्य चीर्णोत्सवौ सम्प्रति जातलज्जौ मन्ये ।

अथ यदुनन्दनः स्नातकसाधर्म्यं सम्प्राप्य स्नातुं तीर्थं जिगमिषुः प्रीत्या श्वशुरपक्षीयै इत्थ प्रत्यपिद्यत—

(4) करयो बालसूर्य सदृशत्वम् ।
(5) पृथुत्वात् गुरुं बृहस्पतिमिति ध्वनिः ।
(6) काव्येषु वर्णनयोग्यम् काव्यस्य शुक्रस्य आस्पदम् । उशना.– शुक्रः काव्य – हलः ।
(7) पादार्चनं कुर्वति पुरुषे मङ्गलम् ।
(8) रेखारूपध्वज, केतुग्रहम् ।
(9) तयो रोचिषा कान्त्या तम चकितं भवति । तमः राहु । तमो राहौ गुणे ध्वान्ते इति रत्नमाला । तयोश्च मन्दगमनम् । शनैश्चरम्
(10) वीक्षायाः चन्द्राश्रितत्वात् ।
(11) प्रणवमन्त्र
(12) नक्षत्रबलम ।

"हे परिहृतभवपाश[1] श्रीश[2] शौरे मा याहि । ईशे त्वयि व्रजति सति त्रिभुवनपरिगीत सकल तीर्थजात पृष्ठत: स्पष्टं युष्मच्चरणवरण भूम्यां[3] आसीत् । त्वदग्रे तीर्थं क्वास्ति ? ईश ते यर्हि सकलतीर्थनिषवणेच्छावर्तते तर्हि त्वदीया मुनय तत्र तत्र तीर्थेषु त्वां स्नापयन्ति किल । विवेकं ध्यानविशेषै त्वां जलमध्यगतमपि कुर्वन्ति । तस्मात् तव अद्य विधेय किमस्ति ? हे ईश यत्र त्वदीयगुणकीर्तननर्तनादि तत्रैव तीर्थ निकरा:[4] किल संवसन्ति । सुजना: समस्त सुकृतं यत्र त्वयि अर्पयन्ति[5], हरे तस्य ते सकल पूर्णं आकलयामि ।

गङ्गादितीर्थनिकरा यत्पादाब्जसङ्गात् पुनन्ति । भुवि भव दन्तरङ्गा: अङ्गानुषङ्गकरणात् तानपि तीर्थनिकरान् पावयन्ति । तस्य तव तीर्थचयेषु गाहनेन किम् ? ब्रह्माण्डखर्परशतायुतकोटयोऽपि यस्य रोमकूपमपि पूरयितुं न शेकु: गङ्गापि यच्चरणसन्नखस्य सेकमात्रं तस्य तव उर्व्यां मज्जनविधौ तीर्थं क्वास्ति ?

भ्रूकाशी[6] वरनाभिमानसवती[7] हारावलीजाह्नवी[8] नीवीदिव्य सरस्वती[9] प्रविलसद्रोमालिसूर्यात्मजां[10] काञ्चीशोभिकटि, कुचोच्च बदरी[11] नेत्रान्तयुग्मयो. प्रभाख्याया: कावेर्या: अन्तर्गतास्यचन्द्रसरसी

---

(1) ससाराभावात् पारत्रिकफलाय यात्रा न घटते ।

(2) श्रीपतित्वात् ऐहिक सम्पदर्थ यात्रा न युज्यते इति हेतु गर्भविशेषण त्वम् ।

(3) कृष्णपादधूल्या गङ्गादिसकलतीर्थाना सन्निधानात् ।

(4) "सर्वाणि तीथानि वसन्ति तत्र यत्राच्युतोयारकथाप्रसङ्ग ।"

(5) "करोमि यद्यत् सकल परस्मै नारायणायेति समर्पयामि ।"

(6) भ्रूरेवकाशी यस्या ता रुक्मिणीम् । काश्या; धनुराकारतया भ्रूसादृश्यम् ।

(7) वरनाभि एव मानससर अस्या अस्तीति । निम्नत्वात् सर साम्यम् ।

(8) हारावल्या गङ्गावत् धवलत्वात् ।

(9) सरस्वत्या: पतित्वात् पीताम्बरनीवीसाम्यम् ।

(10) यमुनाया नीलत्वात् रोमालित्वम् ।

(11) अभिनवराजकुमारीत्वात् उच्चबदरीफलसादृश्यम् बदरिकाश्रमौ ध्वनिलब्धौ ।

ात्राऽस्तु भैष्मी प्रति । हे ईश कृष्ण अस्मिन् मूलमाधवाख्ये क्षेत्रे त्वं ाष्म्याः पाणिं परिगृह्य तदेतत् मूलमाधव उद्यान जगति अप्रतिम तीर्थ ाधेहि । व्याप्तस्य ते यात्रा न नन्दयाम. ।"

स. शौरिः नित्य निजोरुस्थितायाः भीष्मपुत्र्याः रुक्मिण्याः नृत्यद् नोत्तुङ्गकुचयो. ग्रहस्य[1] प्रत्यूहशान्ति काङ्क्षमाणः इव ग्रहशान्ति[2] ार्म चक्रे ।

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्बादिराजोदिते
सर्गः पञ्चदशो मुदामयमभूत् स्वर्गीश्वराणां कुले ॥

## षोडशः सर्गः[3]

रुक्मिण्याः बुद्धिरूपा सखी स्वयंवर समुद्योगे समागतान् स्वयम्भु ामुखान् सुरान् समीक्ष्य रुक्मिणी इत्थ बभाषे—

सखि, रुक्मिणि, पुरा ब्रह्मकल्पस्य आदौ वारिषु कमनीये फणीन्द्र ाल्पे लक्ष्म्या सह कृतालयस्य मुक्तौघैः सेवितपादस्य आदिपुरुषस्य ारायणस्य नाभिदेशात् पद्मं अजनि, ततः पद्मात् पद्मयोनिः ब्रह्मा

(1) ग्रहणस्य ।

(2) आदित्यादिग्रहाणा पूजाकर्म ।

(3) कविनिर्मितोऽयं रुक्मिणीस्वयवर । कृष्णस्य सर्वोत्तमत्वं प्रतिपाद्यतेऽस्मिन् सर्गे । ब्रह्मादीन् यथास्वरूप वर्णयन्ती रुक्मिण्या सखी तेषु अस्वरसबीजं प्रदर्शयति ।

अजनि ।[1] सः मुररिपुः– आत्माभिधः, स्वयं इति प्रथितः अकारवाच्यः अस्य ब्रह्मणः तातः । ततः सखि, अमुं मुनीन्द्राः ख्यात्या स्वयम्भुवं, अजं, आत्मयोनिं विदुः । चेत स्थतच्छ्रुतितति वेदगर्भमिति च विदुः । महोर्मिणां सङ्घातशतैः आतते अम्भसि अदृष्टसद्दिष्टरपद्ममूलः विधिज्ञ सः विधि विजिताक्षवृत्तिः सन् पितरं दिदृक्षुः तपस्तेपे । अथ ब्रह्मा फणासहस्राणां अमलरत्नानां रश्मिभिः तृणीकृतार्कोडुपलक्षलक्ष्मी अम्बुकल्लोलाख्यायां विलोलडोलायाः अन्तरे स्थितस्य नागाधिपस्य शेषस्य भोग शय्यामपश्यत् । तस्यां च सिन्धुपुत्र्या सह शयानं, अम्भोजविशालनेत्रं, मनोज्ञदोर्दण्डसहस्रभासं, प्रवालवत् मृदुना आंघ्रिणा अरुणीकृताश सुवर्णवर्णेन अम्बरेण शोभिमध्यं, अगण्यलावण्यसमुद्रेण हृद्यं, विशालनीलाचलकल्पं, अल्पस्मिताननेन अन्धःकृत चन्द्रदर्पं, परिस्फुरद्भिः कुण्डल-हार-काञ्ची-किरीट-मुद्रा-अङ्गद-नूपुराद्यैः विराजितं, तिग्ममरीचिरोचिषा शरीरेण सम्भासित सर्वदेशं, विशालवक्षःस्थलशोभिरत्नं, विचित्रभूषावलिभिः भूषिताङ्गैः विवृद्धभक्त्या अवनतः विमुक्तैः शक्रार्कविरिञ्चमुख्यैः परीतं श्रीमन्नारायणमपश्यत् । तं नारायणाख्यं चक्रवर्तिनं वन्दिवत् शुभयशश्चिन्होक्तिभिः ब्रह्मा उन्मीलिताक्ष व्यधात् । तस्य नारायणस्य उन्नाल अब्जमेव वरं आतपत्रम् । अहिराट् तत्सिहासनायितः । सन्नद्धाः मुक्ताः एव भृत्याः, समुद्रस्य मान्या ऊर्मय एव चामराणि । समुद्रनादाख्यः दुन्दुभिश्च आसीत् । रमारमेशाभ्यां अनुगृहीतः एषः विरिञ्चः सदा अच्युताङ्घ्रि स्मरणेन धन्यः अग्रे क्रमात् इदं समस्तं जगत् ससर्ज । अय तदीयभक्तेषु अग्रगण्यः ।

सखि, अयं प्राणगणाधिनाथः स्वयम्भुवा सर्वगुणैः समानः । पूर्वं शिवादिदेवाः व्यवदन्त । ततोऽस्य सत्व प्रकटीबभूव[2] । अय जीवनिकाय काये हरेः मनुं जपन् विश्वं जीवयति । हे आर्ये, जगत्पतिः हरिः एनं

(1) अनेन ब्रह्मणः नारायणोत्पन्नत्वेन तदवरत्वेन अनङ्गीकारेऽस्वरसं बीज उक्त भवति । पद्म योनि यस्य स पद्मयोनि ।

(2) अहमुक्थमस्म्यहमुक्थमस्मीसि ता अब्रुवन् । तत्प्राणे उत्क्रान्तेऽपद्यत तत्प्राणे प्रपन्ने उदतिष्ठत् इति श्रुते ।

निजाङ्कमारोप्य जातसुखं विधत्ते किल। सुराणां हि क्वचित् रक्षोवशता भवेत्। अमुष्मिन् मुख्यप्राणे कदापि सा नास्ति। अच्छिन्न मुकुन्दधर्मः अय भाविकल्पे विरिञ्चतामेष्यति किल। हे अम्बुजाक्षि रुक्मिणि, प्राक् एष. पयोब्धिजं दुर्विषह विषं स्वयं पपौ। शिवः नष्टजवं अल्पं पपौ। असौ हरेः निदेशात् प्रियाय विमुक्तिमपि दातु प्रभुः हे सति, अथ सः इह भूमौ अवतीर्य हनूमदाख्यः सन् हरेः सेवां व्यधत्त। अथ भीमरूपः सन् विभोः सेवां विधत्ते। मध्वरूपी भूत्वा अन्यैः त्रिदशैः असाध्यां सेवां विधास्यति।" इति स्वबुद्धिसख्या उदीरिता सा भैष्मी निजांघ्रिपद्मावनतौ सुतौ तौ कृपाकटाक्षण निरीक्ष्य एतयोः प्रभुं एव स्वकान्तं मेने। सा पुनरवदत्– "अब्जासनात् लब्धजन्मा अय भवः। अय विहङ्गराजः। अयं अहीश्वरः। समानविज्ञानबलप्रमोदा एते मुकुन्दसेवाभरिताः किल।"

"देवि, सुपर्वरिपूणां गर्वविभेदने दक्षोऽय शर्वः पूर्वं पुरत्रयं अजंषित् किल। हर्यंघ्रितीर्थेन परिपूतकपर्दं अत्यसाध्यमपि एनं गौरी वशयाम्बभूव[1]।

अच्छः कुण्डलिराट् अयं महाशेष· कच्छपतनो· पवनस्य पृष्ठं पुच्छेन अवलम्ब्य सरिदर्णवशैलपूर्णां सुपृथ्वी पृथ्वी फणातपत्रे सिद्धार्थ खण्डमिव बिभर्ति किल।"

यः बलिना बलिना सम नियुध्य गोमन्तस्य मूर्ध्नि निजदेवतायै हरये मुकुटं प्रादात् स. अयं गरुद्भ्यां जनितेन वायुवा चालताद्रिद्वीपाम्बुराशिः अहिभिरपि वर्ण्यबलः सुपर्ण। स. तार्क्ष्यः अन्यसुरैः असाध्यं विष्णुवाहत्वं तपोभिः अवाप। अयं अहीश्वर. तदीयतल्पत्व अवाप। तौ सुराणां विमुक्तिमार्गौ किल" इति। सती सा रुक्मिणी गरुत्मदसाचल नीलमेघ फणीन्द्रहारोच्चयनीलरत्न उमेशहृसप्रियपादपद्मं रमेशं पतिं चकमे।

सा सखी पुनरूचे "बलस्य अरिः अय इन्द्रः त्रिविक्रमश्रीचरणप्रसादात् त्रिविष्टपस्य ईशः अभूत्। पय.पयोब्धि विमथ्नता तेन नारायणेन असौ

(1) हरिपादोदकधारण स्त्यन्तरपरिग्रहश्च अस्वरसबीजमुक्तंभवति।

इन्द्रः विचित्रभाग्यावृत कृतः। हे देवि, कल्पद्रुमः करिवर.[1] कविवर्ण्य. वाजी,[2] इत्येतानि नित्य अस्य वशे भवन्ति किल। इन्द्रपदयोग्यमहा-विभूतिः सोऽय इन्द्र. मध्ये महासनगतः दैवी सभा अजस्र परिपाति।

अग्रचे भैष्मि अय सुराणां गुरु.। एष धर्मः। असौ सुधाकर.। सः सहस्ररश्मिः। अयं च रत्नाकरशब्दितः। एषा महत्वं अभिधा एव वक्ति।

इमे सर्वे सुराः नित्यं श्रीपतेः सेवाया. वियोगस्य भीत्या अनिमिषाः विनिद्राश्च। तस्य श्रीपतेः करुणया प्रभूतस्य सुधारसस्य आस्वादनेन अमृतत्वं प्रपेदिरे।

परिस्फुरद्भूषणभूषणाङ्गी भैष्मी नरान् तृणीकृत्य मरुत्वतः अत्युच्छ्रितस्य भाग्यस्य हेतु, सुरौघाणां सञ्जीवनस्य अमृतस्य मूलभूतं कृष्णं प्रति जगाम।

सखि, चित्प्रमोदमयाव्ययाङ्गः अखिलदोषशून्यः गुणाम्बुराशिः अयं मुकुन्दः विश्वजनस्य गुप्त्यै अस्मिन् भूतले अतातरत् किल। शास्त्र योनेः अमुष्मात् जगतः जनि-स्थेम-लयादयः धर्माः भवन्ति किल। यद्रोमसु विश्वकोशाः तिष्ठन्ति। तस्य अमुष्य साम्य सुराणां कतमः उपैति? सेतिहासाः पुराणयुक्ताः समस्तवेदाः स्मृतिभि. सह एनं प्रभु मुकुन्दं समानशून्यं आमनन्ति। योऽयं अब्धि विमथ्य लक्ष्मी लभते स्म। हे मृगाक्षि, यदीयपाद. अण्डकटाहस्य भेदी, विधातुः हस्तार्हणस्य सारवेदी सोऽयं विविधैः अवतारैः वियोजितात्युद्धतभूमिभारः। विवेकसख्या इति विबोधिता आत्तमाला सा रमा तूष्णी बभूव। परन्तु तदा तस्याः प्रहर्ष-चिन्हानि रुक्मिणी प्रभु तं आकांक्षतीति ऊचुः।

मुहूर्तावधि तयो. रुक्मिणीकृष्णयोः मध्ये दत्तपटं विनिर्भिद्य मिथः स्पृशन्त्यः तयोः प्रभाः विवेकभाजः पुरुषान् प्रति सदा तयोः अखण्डित योगभाग्य विबोधयन्ति स्म। मङ्गलार्थं सीतास्वयंवरमहोत्सवगानकाले जातौ रमायाः पुलकः माधवस्य मन्दहासः एतौ, 'सा जानकी इयं रुक्मिणी

---

(1) ऐरावत.। (2) उच्चैश्रवा।

अयमेव हि रामचन्द्र. तन्मुहूर्तकथया किं' ? इति शसतः स्म। परस्पर निरीक्षणकर्मकाले, मुरारेः नयन भैष्म्याः मुखाम्बुजगत आसीत्। तस्याश्च नयन कृष्णस्य नाभिसरसीनिलय आसीत्। तदेतत् युक्तम्। असौ अर्कदृक् इयं उत्पलाक्षी। विवाहसमये, बन्धुवर्गे गुडान्विताभिः शुभजीरिकाभि परस्पर वर्षति सति वक्ष·स्थितया अम्भोधिसुतया जितः कृष्ण. तत्पक्ष्यैं प्रयुक्तं प्रथम बभार[1]। श्री. नेत्रान्तनीलोत्पलचारुमालां मुरारेः आपादतलात् आकण्ठ सन्दधे। श्रीपतिः आत्मपत्न्या तस्यां भैष्म्यां तत्क्षण हृष्टरोमाख्यसत्कञ्चुक सन्दधे[2]।

"हे सखि, अय[3] उग्र.। अमले, अय[4] चञ्चल। हे रमे, सोऽयं गूढपात्[5]। असौ[6] वृद्धः। अय[7] ज्वलन.। एष· तपन.[8] असौ हि[9] सद्वक्रतुण्डः। हे मुग्धे, एष अदन्तक[10] देवि, अयं जल (ड) राट्[11]। असौ गोत्रासहः[12] इत्यादि अभिधया एव धिक्कृतसुरा श्री. 'अच्युत' आससाद।

वेधाः वैदिकमौलिः एष पवन. सन्तत मन्त्र जपन् वर्तते, असौ शर्वः सुविरक्तधी, स मघवान् व्यापारभाराकुल, सूर्यः पर्यटनप्रिय·, स तु शशी दोषाकरः असौ स्मरश्च अनङ्ग." इति कमला अखिलान् देवान्

(1) वधूवरयो मध्ये पुरुषप्रयुक्त जीरिकादिकं प्रथमं कन्योपरि पतति चेत् पुरुषो जयवान् कन्याप्रयुक्तं पुरुषोपरि पतति चेत् कन्या जयवतीति लोकप्रवाद। अत्र रमारूपेण कृष्णस्य वक्ष समाक्रम्य स्थिताया· कन्याया जय सुस्पष्ट एव इति तत्पक्षै प्रयुक्तजीरिकाः कृष्ण प्रथम बभार।

(2) विवाहकाले कन्यया मालादातव्या, वरेण कञ्चुकादिक इति सम्प्रदाय रुक्मिणी लज्जावशात् कृष्णस्य मुख अदृष्टवा पादतल मारभ्यक्रमेण कण्ठपर्यन्तं दृष्टवती। सैवनेत्रान्तनीलोत्पलचारुमाला कृष्णदर्शनेन तस्या हृदि रोमाञ्च. सञ्चात। तस्यैव कञ्चुकोप मात्मम्।

(3) शिव. (4) वायु (5) शेषः (6) ब्रह्मा

(7) अग्नि (8) सूर्य (9) गरुड (10) पूषन्

(11) समुद्र. डलयोरभेदात्। (12) इन्द्र, कुलविरोधीति ध्वनि।

उपेक्ष्य यदूनां पति वव्रे । सः पद्मभूः यस्य पुत्र , फणिपतिः यस्य शय्या, खगेश. यस्य रथ , शम्भु यच्चरणाम्बुमौलि· अगभित् इन्द्र. यद्दत्त साम्राज्यभुक्, विधुरवी नित्य यत्पद सङ्गतौ श्रीवधू· यद्वल्लभा सुदती सा रुक्मिणी तं वर्यं द्वारकानायकं वरयाम्बभूव । या (मालिका) चम्पकानां सम्पदा अञ्जवसते. अमता वै, दूर्वाणां श्रिया स्वात्मनः अमता, केतक्या विभवेन कृत्तिवसनस्य अमता, अम्भोजानां कान्त्या विधोः अमता सन्नीलोत्पलानां शोभया दिनमणे अमता श्रीमत्तलख्या हेरम्बस्य अमता, परन्तु हरेः समुचिता सा रुक्मिणीकरस्था मालिका शोभते । प्रमोदोत्थितरोमराजिः सा रमा, 'हरेः प्रसादैकभुजां सुराणा इमां मालां कथं प्रदास्यामि' इतीव मुकुन्दकण्ठे समर्पयामास ।

व्यालोलै हारै उज्ज्वला सा रुक्मिणी धाराम्बुकदम्बकेन सह प्रेमाश्रुधारां हरे आवेद्य भ्राजन्मालिकया सम प्रणयसन्मालां आवेद्य नेत्रान्तेन सुनीराजन आवेद्य, शुचिस्मितामृतरसै. हरे. नैवेद्यमावेद्य तत्फल इव[1] तस्य हरे पार्श्वं मन्दं उपाश्रयत् । समलङ्कृताङ्ग्यः सङ्गीतमङ्गलकथाः नार्य विवाहकाले नवकुङ्कुमाभान् अक्षतान् रुक्मिणीकृष्णयोः प्रववृषुः । सौवर्णविष्टरगतौ कन्यावरौ तौ सदयैः अपाङ्गैः तासां अक्षत फलमेव प्रववर्षतु· ।

गृहीतपाणी तौ वधूवरौ रुक्मिणीकृष्णौ आस्यगं तं रम्यरहस्य गोष्ठ्यां आत्मीय विधातुमिव लाजसमेधिताग्ने. प्रदक्षिण चक्रतु किल ।

तत चतुर्थे दिवसे प्रहृष्टौ एतौ, चिररतौ "तल्पतनौ फणीन्द्रे विलम्बिनि सति क्षमां वहत" इति नागबलि नून प्रचक्रतुः । सा रुक्मिणी मन्दस्मिताख्येन मौक्तिकेन, सदपाङ्गाख्यैः हयै हृत्पुरं वक्षोजद्विरदेन, कायकनकेन, उद्भूतरोमाख्यैः अनुगै. तत्संसक्तमनोरथेन विविधाङ्गानां श्रीविचित्राम्बरैः तस्य कृष्णस्य योग्यस्य अमृतस्य साध नया अधरभुवा त कृष्ण सन्तर्पयामास । तत्र स्वयवरे ज्वलत्कलापा.

(1) अभिषेक–पुष्पमाला–नीराजन–नैवेद्यादिभिः हरे पूजाया कृतया तत्सामीप्यगमनमोक्षलक्षणफलमिव ।

स्फुरदङ्गलेपा: विचित्रवस्त्रा स्मितशोभिवक्त्रा नरा: नार्यश्च वधू वराभा. किल सञ्चरन्ति ।

स्वर्गिभि: गीयमान: भग्नदुर्जनदर्प: असौ रुक्मिणीरमण: दुर्गमं स्वं दुर्गं आविश्य बभौ ।

**समुद्रवर्णनम् :**

सुफेनस्य कान्त्या सितपार्श्वयुग्म: और्वस्य शिखाभि: सुपीत मध्य, अन्यत्र सितेतर. स: समुद्र: भूलधात्र्या. विचित्रवस्त्रश्रियमातनोति । वार्धि: असह्यवन्हिव्यथितोऽपि, उदरे अनन्तरत्नानि पिधाय जातु पानीयमपि न प्रदत्ते । धनस्य लाभादधिको हि लोभ: । सरित्पति: सरितां मुखतो हि वेलां विलङ्घयति । अत: स विवेकहीन. । तथाहि । नार्या सह सङ्गतानां कुतो विवेक: कुत एव वेला ?

सरित् बहूपभोग्या अपि समुद्रतटे कण्टकितोपकण्ठा सा न बहूपभोग्या, काश्चित् खलु रहसि विटान् उपाहूय स्वभर्तु तटे सदाचारपरा: भवन्ति । सुहृत् तोयेश स्वीयाशायुवतिमुपेत्य रागभाज इन्दो. नाश वीक्ष्य आनन्दात् अनिश उच्चै वृद्धि उपैति । एकस्यामभिरतिमिच्छतो: क्व मैत्री ? वार्धि: अन्त. कृतान्तोपमेन वाडवाग्निना सन्लप्तगात्रोऽपि मुदा गर्जन् इव फेनस्मितश्री: गगनस्पृगूर्मि: सन् गाम्भीर्यमावेदयतीव वर्तते । कृष्ण: स्वगृहस्य सिन्धो: दोषिसखित्वजाता असेव्यतां जहार इति न चित्रम् । यत: तद्दिष्टा एव हृष्टा: सन्त महान्ति पापानि हरन्ति । पुरा अपि अजेय: मुरजित् अत्र समुद्रे पुरी विधाय अत्यजेय: अभवत् किल । कलत्रवस्त्रे कृतालय क. खलु जेतुकाम. ? –इत्थं मम आभाति । रम्येण फेनाख्येन आसवेन शोभिवक्त्र: स समुद्र. विधूदये ,सति तरङ्गाख्यै: हस्तै: नदीनां जघन संस्पृशति । सरसस्य कस्य हि इन्दु दृष्टया काम न स्यात् ? सितेतर· पीतकृशानुमध्य: नदीभि. सहस्रश. श्लिष्टतनु अब्धि: अनेकयोषितां परितोषदायी पीतवासा. स: कृष्ण इव भासते ।

मुनीश्वरा. वर्त्मनि इत्थ वारिराशि वर्णयन्तः तां द्वारवती समेत्य मुदा कृष्णं उपासते ।

रोम्णां हर्षणकारिणि श्रवणत पापौघविध्वंसिनि ।
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते ।
सञ्जातः सुरमण्डलीषु सुतरां सर्गो मुदां षोडशः ।।

## सप्तदशः सर्गः*

स्वभजकस्य अब्जकुलस्य[1] उदयहेतवे भवमहानलात् मुक्तभयानां अनुगानां छविपदे[2] जलनिधौ वरभोगिनिकेतने[3] लसते अविपदे नारायणाय

---

* अस्मिन् सर्गे प्रथमतः चतुर्विंशतिपद्यैः एकार्थेन तत्तदवताराः अन्यार्थेन सर्वपद्येषु कृष्णकथा च ऋषिवाक्यतया वर्ण्यंते ।

(1) मूलरूपनारायणवर्णनम्– मुक्तब्रह्मसमूहस्य ।

(2) लक्ष्मीविमुक्तगरुडविष्वक्सेनाद्यनुगानां कान्तिस्थाने जलनिधौ प्रलयसमुद्रे । कृष्णकथा– स्व भजकस्य अब्जस्य चन्द्रस्य कुलस्य यादववंशस्य उदयहेतवे, भवस्य काशिराजेष्टदैवस्य शिवस्य महानलः द्वारकानाशाय प्रयुक्तः कृत्यारूपाग्निः तस्मान्मुक्तभयाः अनुगाः यादवाः तेषां कान्तिस्थाने द्वारावतीपत्तने-द्वारावती समुद्रस्थे–वरभोगिनां श्रेष्ठ सुखिनां निकेतने– लसते विपद्रहिताय कृष्णाय नमोऽस्तु ।

(3) शेष एव निकेतनं तस्मिन् ।

नमोऽस्तु । मुनिजना जनककर्दमशोभिगृहाङ्गणे कुशकृतस्थलसिद्ध पुरीश्वर कठिणतत्त्वगतिश्रमदायुध निजनाथ अमु जगु [1] ।

मुने, यमजनि निजविद्घनमूर्तित प्रकटित तापसविग्रह भज । गिरिमूर्धनि नरधृत यत्पद लसता ईड्यनखेन्दुना लसते [2] । विमलदत्तपदः प्रणतार्जुनाभ्युदयहेतुः अमानवयोगधृत् सुधिया अनसूयया हृदिधृत हि सः मम भवतापहरो भवतात् [3] । भरतशास्त्रविशारदताकर, नवयोगिनां

---

(1) कपिलावतारः– मुनिजनाः जनकस्य कर्दमऋषेः शोभिनि गृहाङ्गणे कुशैः कृतस्थलस्य सिद्धपुर्याश्रमस्य ईश्वर कठिणतत्वानां अवगतौ श्रमपरिहारकायुध निजनाथ अमु कपिलं जगुः । कृष्णपक्षे– मुनिजनाः जनकस्य नन्दगोपस्य कर्दमेन पङ्केन शोभिनि गृहाङ्गणे, कुशनामकदैत्येन कृतेस्थले सिद्धायाः पुर्याः द्वारकायाः ईश्वर कठिणस्य तस्य कुशदैत्यस्य त्वचः अति श्रमदायुध (शार्ङ्ग) वन्त निजनाथं कृष्ण अमु जगुः ।

(2) नारायणावतारपक्षे– हे मुने, यमात्जनि. यस्य तं, निजा स्वविषयिणी चित्ज्ञानं तया घना निबिडा । सा च सा मूर्तिनाम्नी धर्म पत्नी तस्याः प्रकटित, मुनिरूपं नारायण भज । गिरिमूर्धनि शतशृङ्ग पर्वतमध्यस्थे नारायणवासभूते तुङ्गशिरसि नरेण नरनामकऋषिणा सेवार्थं धृतं यस्य नारायणस्य पदं लसता ईड्यनखेन्दुना विलसते ।

कृष्णावतारकथा– हे मुनयः यं अजनि कृष्ण भजत । स कृष्णः निजा स्वाभाविकी विद्घना ज्ञानमयी मूर्तिः मूलमूर्तिः कृष्णकेशात्मिका ततः प्रकटितं विग्रहं आप । गिरि स्तुतिरूपवाचि मूर्धनि अवनते शिरसि नरेण अर्जुनेन धृत स्तुत यस्य कृष्णस्य पदं लसता ईड्य नखेन्दुना विलसते ।

(3) दत्तावतारः– विमलदत्तात्रेयनामधेयः प्रणतस्य कार्तवीर्यार्जुनस्य अभ्युदयस्य हेतुः दिव्ययोगाभ्यासधारी सुधिया अनसूयादेव्या गर्भे धृतः सः दत्तात्रेयः मम भवतापहर भवतात् ।

पितृवत् प्रियकृतं, मधुराधिपं यं ऋषभ सुमधुरा सुमति. जयन्ती अन्तिके अगात्[1] ।

स. अनुभव जनकदोष उपेत्य शर्वरीतिजननीमपि हर्षयन् अन्वहं रसदोहकृत् बालवपुस्सुरसदः दृशि घटयते[2] , यः अगदपाणि विजनिता-पदवद्यवनाय शमदायकः अभूत् । कृती उदधिरत्नं सहजश्रिय इभजेडच-गति अमु हृदि भजेत्[3] ।मधुरयगजित, दानवसद्गिरौ अशनिकाय, गतागम

---

कृष्णकथा–विमलाय भक्ताय दत्तद्वारावतीपदः प्रणतस्स्य अर्जुनस्य अभ्युदयहेतु. अमान–वयो (पक्षि) मद्गोवर्धनागधृत् स कृष्णः मम भवतापहरो भवतात् ।

(1) ऋषभरूपम्– भरताख्यस्वपुत्रस्य शास्त्रे विशारदताकरं, कविहरिरित्यादि नवयोगिनां भरतानुजानां पितृवत् प्रियकृतं मधुराणां वचसा अधिपं ऋषभनामक सुमधुरा सुमतिः जयन्तीनाम्नी पत्नी अन्तिके अगात् ।

कृष्णकथा–भरतशास्त्रस्य नाटचस्य विशारदताया. आकर पितृवत् नवयोगिनां (उपनीतानां प्रथमतः कृष्णमन्त्रोपदेशात्) प्रियकृतं मधुरा-धिप ऋषभ (श्रेष्ठ) कृष्ण सुमधुरा विषयादिक जयन्ती सुमति. अन्तिके अगात् ।

(2) शिशुमाररूपम् : सः नारायण. भव अनु प्रतिशिशुमाराव-तारे) जनक दोषाख्यं प्रजापतिं उपेत्य शर्वरी इति नाम्नी जननीमपि हर्षयन् अन्वह अद्भुतरसस्य दोहकृत् बाले वपुषि च स्फुरतां सुराणां सद. (सभा) जनानां दृशि घटयते । कृष्णकथा– अन्वहं स्फुरत् सुरसदः रसस्य (सुखस्य) दोहकृत् बालवपुः कृष्णः जनकस्य नन्दस्य दोष (हस्त) उपेत्य (तत्करेण लालित.) जननी यशोदामपि हर्षयन् शर्वस्य रीतेः (दिगम्बरत्वस्य) अनुभव पश्यतां जनानां हृदि घटयते ।

(3) धन्वन्तरिवर्णनम्– यःधन्वन्तरि. अगदपाणि. सन् विज नितस्य रोगापद्-अवद्याख्याय वनाय शमदायक. अभूत् उदधेः क्षीर-समुद्रस्य रत्नमिव रत्न सहजश्रिय (सहजाताश्री. यस्य स) इभजवत्

साधक, हर्षकराकृते, भवगत, अवगताखिल नरतुरङ्गम नः पाहि[1] ।यतः जलान्तर्वर्तिनिजास्पद प्रणतविप्रजनाम अकरोत् ननु । बिमलभीमरथी प्सितदायकः अय अच्युत.अविजितः अपि स्वविजितः[2] । रुचिर केशव ते शम्बरधाम[3] लसति । समाकृते मारमणः[4] असि । सकलगोकुल-

---

ईड्यगति अमु धन्वन्तरि कृती हृदि भजेत् । कृष्णकथा- यः कृष्ण विजनितां पक्षिणां तावदव्याधवत् अगदणाणिः सन् कालयवनाय शम-दायकः अभूत् तं सहजश्रियं ईभजेन कुवलयापीडेन ईड्यगति उदधिरत्नं (कौस्तुभरत्नवन्तं) अमुकृती भजेत् ।

(1) हयग्रीव वर्णनम्- दानवस्य मधोः रयेण अजित, दानवानां सभाख्यगिरौ अशनिवत् कठोरकाय, गतस्य मधुकैटभाहृतस्य आगमस्य वेदस्य साधक, हर्षकराकृते, भवगत, (भवः गतः यस्मात्) सर्वज्ञ, नर तुरङ्गम (हयग्रीव) नः पाहि । कृष्णकथा-मधुरया सद्गिरा जित- (दुर्योधनाख्य) दानव, वशानां पाण्डवानां निकायस्य गतस्य राज्यस्य आगमसाधक नरस्य अर्जुनस्य तुरङ्गमाणां हर्षकराकृते भवगतौ (अपि) अवगताखिल श्रीकृष्ण, नः पाहि ।

(2) पाण्डुरङ्ग वर्णनम्- यतः पुण्डरीकतीर्थजलस्य अन्तरे वर्त-मानं निजं आस्पदं स्वगृहं प्रणतात् विप्रात् जातनाम (पुण्डरीकदेवालयः इति) अकरोन्ननु । विमलभीमरथ्याः ईप्सितदायकः अयं पाण्डुरङ्ग. अविजितोऽपि स्वभक्तेन विजितः ।

कृष्णकथा- प्रणतानां मधुरापुरस्थ विप्रजनानां कालयवनकृतात् आमयतः निजास्पदं जलान्तर्वर्ति (द्वारकासमुद्रवर्ति) अकरोत् ननु । विमलस्य भीमाख्यस्य रथिनः ईप्सितदायकः अयमुच्युतः अविजितोऽपि स्वभक्तैः विजितः ।

(3) केशवादिरुपाणि- नीरक्षीराम्बुशम्बरम् । उदकाख्यगृहम् । अनेन नारायण इत्युक्तं भवति ।

(4) सर्वावतारेषु समाकारत्व, मायाः रमणः माधवः असि ।

पालक[1] अरिहर अखिलवास[2] नः दुष्कृति परिहर । मधुमदक्षयमाल्य-सुविस्तृत, कुजनमानसमाप्तिदविक्रम, सोमरसार्थिषु सुखदवामन उदाय अवनौ मुदा श्रियं आर्जयसे[3]। करणपालनशील, जलजनाभ, कं आश्रिताः नते स्थिति वदन्ति । वरदामधरोदर प्रियजुष. अमी न ते यजुष· अग्निबलीन् इव स्थिति विदु.[4]। विभजते ग्रियमृगाजिनता अखिलदा अत्यरुचिप्रदा इति अहो भजतां मुदे शुभसमुद्रकर वरयतेः स्थिरभूति त भजत ।[4]

---

(1) कलाभिः सहित सकलम् । गोकुल शास्त्रम् । तस्य पालक गाः शब्दान् विन्दते प्राप्नोति पालयतीति गोविन्द. इत्युक्त भवति ।

(2) अखिलेषु वासः यस्य सः । विषलृव्याप्तौ इति धातोः विष्णु. इत्युक्त भवति ।

कृष्णकथा– हे रुचिर केश ते वशं वरधाम द्वारका लसति । हे मारमनो– असि समाकृते सकलगोकुलपालक कसाद्यरिहर अखिलवास कृष्ण, न. दुष्कृति परिहर ।

(3) मधुसूदनादय.– मधु-मद-क्षय (मधुसूदन) माल्याः आल्या· असुविस्मृते (लक्ष्मीप्राणनाथ) कुजनानां मानसमाप्तिदपादविक्रम (त्रिविक्रम) सोमरसार्थिषु देवेषु सुखद वामन अवाप्तसकलकाम अवनौ मुदा श्रिय अर्जयसे (श्रीधरः) कृष्णकथा–मधुमत्–अक्षयमाल्य– सुविस्तृते कृष्ण कुजनानां मान-समाप्तिदविक्रम अमरसार्थिषु देवसहायवत्सु अमनसः दुर्जनस्य सुखस्य दावाग्निकल्प उदाय अवनौ मुदा श्रिय आर्जयसे । अथवा द्वारावतीश्रियं उदाय (समुद्रजलाय) दातु आर्जयसे ।

(4) हृषीकेशादयः– करणानां पालनशील (हृषीकेश) जलजनाभ (पद्मनाभ) कं मुख्यप्राणं (आश्रिताः) त्वद्भक्ताः नते नम्रे भक्ते तव स्थिति वदन्ति । वरदामधरोदर (दामोदर) तव प्रियजुषः अमी मध्व शिष्याः नते तवभक्ते यजुर्वेदाध्ययनात् यज्ञान् इव स्थिति विदुः। कृष्णपक्षे– सृष्टयादिकरणपालनशील भवदन्तिकं आश्रिताः अधरोदर

प्रियप्रणयपाशवृत कुमतिनां अतिनाशनदण्डधृत् त्व अथ भजक भाविविरिञ्चकृते इत. अब्धिगः सन् तदवनि शिवरूप्यं एष्यसि[1] । अनिशं भुवनवासी मनुसंस्तुत. अन्वहं विधिविरोधिविनाशकृत् अनिमिषप्रभुः आगमहर्षदः जवशोभितसागरः निजवशोऽस्तु[2] ।

---

प्रियजुष. अमी यादवाः अयजुषः अग्निबलीन् यज्ञानिव ते वरदां स्थितिं न विदुः ।

(4) वेदव्यासवर्णनम्— स्वाङ्गात् विभाग कुर्वते वेदव्यासाय (कृष्णाजिनंमुञ्चते) प्रियमृगाजिनता अति अरुचिप्रदा । कृष्णाजिन मुञ्चतः तस्य अरुचिः जायते । (कृष्णाजिनं कदापि वेदव्यासः न मुञ्च तीत्यर्थ ) कथमिव । अखिलदा ब्रह्मविद्या इव । भजतां शुकादीनां मुदे शुभं स-मुद्र करं धरन्तं वरयतेः मध्वाचार्यस्य स्थिरज्ञानप्रदं त वेदव्यासं भजत । कृष्णपक्षे—भजतां यादवानां मुदे शुभसमुद्रकरं (द्वारकायाः परित ) आजौ पारिजातापहारकालीनयुद्धे नताखिलदैवत कृष्ण, स्थिरभूतेः शिवस्य महः भजते शिवभक्ताय अत्यरुचिप्रदा (नते विष्णो जायमानो न जातः इत्यादि) ऋक् वरयते । मुहु शिवं कृष्णात् विभजते च ।

(1) उडुपीकृष्णवर्णनम्— प्रियप्रणय. पाशवृतः कृष्ण. कुमतिनां अतिनाशनदण्डधृत् त्व अथ भजकस्य भाविविरिञ्चस्य मध्वाचार्यस्य कृते इत. द्वारावतीतः समुद्र (मार्गगः) सन् तदवनि शिवरूप्यं एष्यसि । द्वारकाकृष्णपक्षे— शिव (मङ्गल) रूपी कुमतिना जरासन्धादिना अमितः अज्ञात. अमति (अज्ञान) नाशनदण्डधृत् त्वं इदानीमिव अथ ब्रह्मणः आगामिनि दिनेऽपि मूलरूपेण अब्धिगः क्षीरसमुद्रशायी सन् भजकस्य भाववत. भक्तिवत. विरिञ्चस्य कृते प्रियेषु भूमिस्थभक्तेषु य. प्रणय स एव पाश. तेन वृत सन् तदवनि भक्तानां भूमिं एष्यसि ।

(2) मत्स्यावतार वर्णनम्— अनिशं भुवन (जल) वासी वैवस्वत मनुसंस्तुतः अन्वहं विधिविरोधिनां दैत्यानां नाशकृत् वेदान् आनीय पुन. प्रचारकरणेन देवानां हर्षदः जवेन शोभितप्रलयसमुद्रः अनिमिषाणां मत्स्यानां प्रभुर्हरि. निजवशोऽस्तु ।

भुजग दिक्करि-भारजशोकहृत्, सुरमनोरथपूरणकारणः स्वमत-वारिनिधेः मथने पटुः गिरिधर. अरिधरः अय इह आगत.[1] । स्ववश गोरिपुभीषणचेष्टितः वरवराहृतया द्विषा दवकृत् मखसहायकृतिः धरया अर्चितः अयं अमलया कमलया वृत. अहो ।[2] अरिहिरण्यकसक्षय कारकं अद्भुतचेष्टितं अघकृदिन्द्रकृतार्चनतोषितं, अजमनोहरविक्रम नरमृगाधिपं हे मनः भज[3] ।

---

कृष्णपक्षे- अनिश भुवनेषु लोकेषु वासी अन्वह मनुना कृष्ण मन्त्रेण संस्तुतः विघः विहितराजसूयादीनां विरोधिन. जरासन्धशिशु पालादयः तेषा विनाशकृत् इन्द्रप्रस्थ प्रति स्वागमेन पाण्डवानां हर्षदः द्वारवती प्रति पुनः परावृत्य गमनजवेन शोभितसागरः अनिमिषाणां देवानां प्रभुः श्रीकृष्ण. निजवशोऽस्तु ।

(1) कूर्मावतार वर्णनम्- भुजगस्य दिक्करिणां च भूभारजशोक हृत्, सुराणां अमृतपानमनोरथस्य पूरणकारण, स्वस्य समतस्य क्षीर समुद्रस्य मथने पटु मन्दरगिरिधरः चक्रधर. अयं कूर्मः इह क्षीरसमुद्र मथनप्रदेशे आगतः । कृष्णकथा- भुजगस्य दिक्करिणां च भूस्थित दैत्य भारजशोकहृत्, सुरमनोरथस्य पूरणे कारण (युद्धसाधन) यस्य सः सु-अमतदैत्याख्य समुद्रमथने पटु. गोवर्धनगिरिधरः, अरीणां धर. (पर्वत ) इव स्थित अय कृष्णः इह द्वारवत्यामागत. ।

(2) वराहावतार वर्णनम्- स्ववशायाः गोः भूमेः रिपोः हिरण्या क्षस्य भीषणचेष्टितः वरवराहृतया द्विषा दवकृत् (परम्परहन्यमान दंष्ट्रा ग्रेण अग्निकृत्) मखस्य यज्ञस्य सहायाः साधनीभूताः कुशाद्याः तेषा स्वाङ्गेभ्य करण यस्मात्स धरया अर्चित अयं वराह अमलया कमलया वृत । कृष्णपक्षे- स्ववशाना गवां रिपूणां व्याघ्रादीना भीषणचेष्टितः द्विषा वररुद्रादे वरेण अहतयादवकृत् पाण्डवाना राजसूयमखस्य सहाय कृति. प्राग्जोतिषपुरे नरकासुरमात्रा धरया अर्चितः अय कृष्ण अमलया कमलया रुक्मिण्या वृतः अहो ।

(3) नरसिहावतार वर्णनम्- अरेः हिरण्यकशिपोः सक्षयकारक वृत्रहत्यारूपाघकृता इन्द्रेण कृतार्चनेन तोषितं अजस्य ब्रह्मणः- मनोहर

बलहृदार्तिहरानुजनि. बलिपराजयकृत् सतां जयकृत् अवनिजात पलाशसुदण्डधृक् भुवनपावनपादसरोरुह प्रभु ।[1] युधि सहस्रकरोर्जित बाणहृत्परशु अर्जुनमतिक्षतिदायक कुभरसंहरणे उग्ररणे अग्रणी द्विज भव: अजभवोन्नतिदायक: ।[2] अहिमकान्तिमत कुलं कलया अधिक भूषित व्यतनुत । अन्यदशास्यसुखण्डन. क्षितिसुतातिसुतापभिदाकृति: अभय अञ्जसा व्यतनुत ।[3]

विक्रम नरमृगाधिप नरहरिं, हे मन: भज । कृष्णकथा– अरीणां दुर्योधनादीनां हिरण्यकस्य (सम्बद्ध) सक्षयकारकं शैशवेऽपि उदरे ब्रह्माण्डधारणादि अद्भुतचेष्टितं, स्वयागध्वसे कृष्णावज्ञारूपापराधकृता इन्द्रेण कृतार्चनेन तोषित, (पट्टाभिषेकादिना तोषित) अजस्य-कामस्य-मनोहर:-विक्रम पादविक्षेप यस्य स तं, नरमृगाधिप कृष्ण हे मन: भज ।

(1) वामनावतारवर्णनम्– बलासुरहृद. इन्द्रस्य आर्तिहर: अनुजनि., बलिचक्रवर्तिपराजयकृत् सतां जयकृत् अवनि-जात-पलाश-सुदण्डधृक्, भुवनपावनपादसरोरुह वामन अस्माक प्रभु ।

कृष्णकथा– बलरामस्य हृद: हृदयस्य आर्तिहरानुजनि:, बलिनां जरासन्धादीना पराजयकृत् सतां पाण्डवाना जयकृत् अवनिजातानां पलाशानां राक्षसाना सम्यक् शिक्षाकृत्, भुवन लोक पातीति भवनप: अर्जुन. तस्य अवन यस्मात् भुवनपावनम् पादसरोरुह यस्य स:, कृष्ण: अस्माक प्रभु: ।

(2) परशुरामावतार:– युधि सहस्रकरस्य कार्तवीर्यार्जुनस्य ऊर्जितबाणहृत्परशु , तस्य अर्जुनस्य सती क्षिति: क्षय: तस्यदायक: (बाणान् छित्वा तस्य पि खण्डन कृतवान् इत्यर्थ:) कं पृथ्वी बिभ्रति इति कुभरा क्षत्रिया: तेषा संहरणे उग्ररणे अग्रणी ब्राह्मणकुलोत्पन्न: परशुराम: अजभवयो: उन्नतिदायक. ।

कृष्णपक्षे– युधि सहस्रकरस्य ऊर्जितबाणासुरस्य हृदि परशुरिव, अर्जुनस्य मतिक्षतया: दायक कु-भर-संहरणे उग्ररणे अग्रणी द्विजभव:

रुचिरभारतपुण्यकथोदय , शुकसुभाषणतोषणकारण. क्षितौ विमलधर्मशुभस्थितिकृत् असौ अथ नृणां यमसौहृदकृत् ।[1] रवविन् यथा अम्बर भुवि इत आत्मनः नवमाकृति सकलवित् खलसञ्चयवञ्चक स्वमतिद एष. नथागत न मनिदोषकरोऽस्तु ।[2] वितत, विष्णुयशोजनन अञ्जसा कृतयुगोन्नतिदातृकरोजिन, द्विजसुहृत्कलिकाननदैन्यहैरवसिधर, धराभयकारक असि .[3]

इत्थं सरससल्लापै. सता पति श्रीकृष्ण सस्तुवन्त. ते मुनय. प्रत्यहं तत्पदाम्भोज ईक्षमाणा द्वारवत्यां वसन्ति ।

---

द्विजनां ब्राह्मणानां भव: मङ्गलं यस्मात्स ) कृष्णः अजभवस्य शिवस्य कैलासयात्रादिना उन्नतिदायक ।

(3) दाशरथिराम:–अहिमकान्तिमत: सूर्यस्य कुल कलया अधिक भूषितं व्यतनत । अन्यस्य वैरिण दशास्यस्यासुखण्डन क्षितिसुतायाः सीतायाः सुतापभिदाकृति. राम लोकस्य अञ्जसा अभय व्यतनुत ।

कृष्णकथा - क्षितिसुतस्य नरकासुरस्य अतिसुताप-भिदा-कृतिः अन्येषा शत्रूणां दशा-असि-असु-खण्डन कानां (मस्तकाना फणानां लयेन आकुल (कालय-आकुलं) अकान्ति अहिं कालियं अत: यमुनाहृदात् अधिकाया जन्मभूम्यां उषितं (अधिक-भू-उषित) व्यतनुत । अञ्जसा तस्य गरुडात् अभयं व्यतनुत ।

(1) पुनर्वेदव्यास वर्णनम् . रुचिरभारतपुण्यकथोदय. शुकाचार्यस्य सुभाषणास्यतोषण कारणवान्, क्षितौ विमलधर्मस्य शुभस्थिति कृत्, असौ श्रीवेदव्यास नृणा यमेन सह सौहृद करोति । तदुक्तधर्मं माचरतां यमभय नास्तिइत्यर्थ. ।

कृष्णकथा– रुचिरायाः भारतस्यार्जुनस्य सम्बन्धिन्याः पुण्य कथायाः गीतायाः उदय यस्मात्स., शुकवत् सुभाषणास्यतोषणकारण वान्, क्षितौविमलधर्मराजस्य शुभस्थितिकृत् यमयो नकुल सहदेवयोः सौहृदकृत् अथ असौ द्वारावतीस्थः श्रीकृष्णः ।

## द्वारवती वर्णनम् :

इह अखिलैश्वर्यमुभोगगृद्धे, परत्र निःश्रेयसमौख्यसिद्धे परं द्वार कृष्णाख्य महः अवाप्य अमौ पुरी पृथ्व्यां द्वारवती अभूत । यत सेय पुरी कवाटे विवृतेऽपि हरिन्मणीनां महत्या प्रभया कवाटान्तरिता इव भाति । सा कथ नु द्वारवतीतिमन्ये । अरिसेना यदीय त्नावृतहेम-वप्रसकाश अभ्येत्य समुद्यतासीन् प्रतिबिम्बराशीन् निरीक्ष्य दीना सती बहुशः निवर्तते स्म ।

मुक्तावलीभिः राजितसर्वगेहा, नित्य प्रमोदाशनसत्समूहा, दुष्टैर गम्या मुरारे दयिता सा द्वारवती पुरी मुदितप्रभा । विचित्र-रत्नावृत वप्र-सौध-गृहाङ्गना-गोपुर-वापिकौघ इद पुरीरत्नं अवाप्य अब्धिः नूनं

---

पूर्वपृष्ठतोऽनुवृतम्—

(2) बुद्धावतारः– स्वावित् स्वप्रकाश यथा अम्बर भुवि इतः व्याप्तः परमात्मन नवम-आकृतिः सकलवित् खलानां त्रिपुरस्थदैत्यानां सञ्चयस्य स्वरचितबौद्धागमेन सु-अमति (मिथ्याज्ञान) द, एष तथा गत. बुद्धः नः मतिदोषहरोऽस्तु ।

कृष्णकथा– यथा अम्बरं, भुवि तथाऽऽगतः स्वैः भक्तै विदितः परमात्मनः मकाशात् अनवमा अनूतनाआकृतिः, सकलवित्, दुर्योधनादिखलसञ्चयस्य वञ्चक, स्व-मतिद कृष्णः न. अमतिरूपदोषहरोऽस्तु ।

(3) कल्कयवनारः– हे वितत, विष्णुयशोजनन, (विष्णुयशोनामक ब्राह्मणाज्जनन यस्य) अञ्जसा कृतयुगस्य उन्नतिदात्रा करेण ऊर्जित, द्विजानां सुहृदि कल्कल्याख्य कानन तस्य दैन्य (छेद) कारणासिधर हे कल्किन् त्व धराया अभयकारकोऽसि ।

कृष्णकथा– विततस्य विष्णो यशोजनन (यशस. प्रादुर्भावः यस्मात्) अञ्जसा कृत युगवत् (रथाङ्गविशेषवत्) उन्नति. दैर्घ्यं यस्य सः तेन दात्रा करेण ऊर्जित, द्विजसुहृत् (चन्द्र) कलिकानन, शत्रूणां दैन्यहेतुनन्दकाख्यासिधर हे श्रीकृष्ण त्वं धरायाः अभयकारकः असि ।

रत्नाकरशब्दितः बभूव । आशुगस्य बलेन समुद्र उत्सृज्य पुरी प्रविष्टा मुक्तावलिः मरुद्बलेन भवाब्धि उल्लङ्घ्य आप्तविकुण्ठमुक्तावलिवत् विरेजे ।

'स हरि मदीय पारिजाततरु नयतु । उच्चां गम स्व पुरी अमरावती नेतु न समर्थः भवति ।' इति मरुत्वता ईरित एव कृष्णः इमां द्वारवतीपुरी स्वर्गादपि रम्यतमा चकार । पोत अधिष्ठिताः वणिक्-समूहाः स्वकार्यलाभाय अमू द्वारवती श्रयन्ते । हरिपादपोतकृताश्रयाः सिद्धजनाश्च ज्ञानानन्दादि स्वरूपसिद्ध्यै दूरात् अमू द्वारवती श्रयन्ते ।

इमां पुरी अधिश्रित्य व्रतिन परत्र लोके विमुक्तिमेव व्रजन्ति । पुरा ससारावस्थायामपि नाकाधिकद्वारावतीभाजां तेषा स नाकः बहुमानपात्र कथ स्यात् ? यस्याः द्वारवत्या श्रुतिसङ्गतेन स्वकोटिमात्रेण गुणेन विनम्रवक्त्रा अवज्ञासञ्छादनवैखराज्ञा काशी धनुषः अनुकार बभार ।

इन्द्रः सुधर्मपुञ्जस्य अवने मूलभूत द्वारवत्यां कृताधिवास अच्युतं वीक्ष्य पुरावत् स्वससदः अत्युच्चसभायाः भिया इव स्वकीयां सुधर्मा सभा कृष्णाय प्रददौ । सः मागधः कृष्णस्य परिखीकृताब्धि पुरी अगम्यां निशम्य निरूढचिन्तः इह क्रमात् जरासहितगात्रसीमा सन् जरासन्धः इति योग्यनामा बभूव ।

इह द्वारवत्या यामिकाः रात्रौ सितानुलेपाम्बनमाल्यहाराः शुचिस्मिताः व्रजन्तीः वारवधूः उदितेन्दुद्युतितः अतिरिक्ता लक्षयितु न क्षमन्ते । इह मुरारेः पुरे मनोज्ञा बुधाः वदान्याश्च काव्योचितश्लोक[1] अपेक्षमाणाः विद्वज्जनानन्दकरान् अर्थान् पदेपदे विचारयन्ति । यस्य अंघ्रितीर्थेन गङ्गया, यदीयनाम्न बलेन च काशी प्रथिता आसीत् किल, तस्य मुरद्विषः निवासभूता इय द्वारवती पुरी त्रिलोक्यां अद्वितीया ।

(1) काव्यस्य योग्य पद्यमपेक्षमाणा बुधा, काव्ये वर्णनयोग्य यश अपेक्षमाणा वदान्या । पद्ये यशसि च श्लोक – अमरः :

तस्यां द्वारवत्या चलद्भ्रुवः वाग्वध्वः समानान् जनान् स्मरस्य उच्चलत्कार्मुकलग्नानां नीलोत्पलेषूनां घातैरिव चञ्चलनेत्रपात्रैः वशयन्ति । इय पुरी उन्मयूखैः स्वगोपुरौघैः दिव व्यतीयाय । अन्तर्हृदि मुकुन्दं धारयन्त्या विचित्रतीर्थानि च स्पृशन्त्याः तस्या द्वारवत्याः तन्न चित्रम् ।

अत्र द्वारवत्यां ब्रह्मा (कृष्णा) स्त्रवान् भक्तजनः रतिपतेः सचिवं क्वचित् तूष्णी वसन्त विधाय, तन्मित्र चन्द्र क्षयभाजन विधाय, तस्य कामस्य अनुगान् पिकादीन् गिरा माधुर्यधुर्यान् विधाय त च काम अनङ्गीकृत्य प्रत्यह चरन्ति । परिपन्थिशून्याः सन्यासिन स्मरस्य भार्यां अपहृत्य विष्णोः स्नुषा तां रति तदङ्घ्र्यब्जयुगे निधाय स्वकीयं काम जय भुवि दर्शयन्त सन्तः सञ्चरन्ति ।

अपरे च द्वारवत्यां मार दर्पकर प्रतर्क्य, तस्य सुहृदं चन्द्र जगन्मोहन मत्वा, तस्य सेनां च प्र-मदां मत्वा, शरांश्च विषमान् तस्य अनुगान् पिकादीन् व्योमगान्मत्वा, तस्य कोदण्ड सुमनःसमूहविनुतं मत्वा स्मरसारथिं वसन्त तं पूजित मत्वा तां सेनां अवलम्ब्य तस्य कामस्य वशगा सन्त रमन्ते ।

कतिचित् कृष्णार्चका तस्य शास्त्रस्य श्रवणोत्सवेन, केचन सुधियः त सङ्कीर्त्य, सस्मृत्य तत्पादाब्जनिषेवया तस्य अर्चया अपरे सख्येन केचित् बहुश प्रणम्य, तवदासा इति आत्मान तस्मै कृष्णाय निवेद्य मोक्षनिरताः सन्ति ।[1]

अङ्गीकारस्य गिरां श्रुतौ अभिरताः मानिनीः ताः कामिनीः सङ्कीर्त्य तासां पादौ परिगृह्य वन्दनं कृत्वा "वयं त्वदीयाः" वय त्वद्दासा इत्युदीर्य, मनसा अतीतां रतिं स्मरन्तः सख्यकुशलाः केचन विलासिनः नीवीमोक्षफलाय राम-अर्चका अत्र द्वारवत्या वसन्ति अहो !

अत्र प्राकाराद् बहिः अयं वारिधिः स्वातौ अम्बुदैः वृष्ट वारि प्राप्य ततः चिरेण हृदये मुक्तामयः जायते । द्वारवत्यां अभ्यन्तरे विप्र

---

(1) श्रवण कीर्तन विष्णोः स्मरणं पादसेवनम् अर्चन वन्दन दास्य सख्यमात्म निवेदनम् इति नवविधा भक्ति ।

जलधि· हस्तयुष्टेषु कृष्णाख्येन अब्देन वृष्टं वित्ताम्बु सदा प्रतिपद्य तत्क्षणमेव मुक्त-आमयः जायते । अहो !

जलौघाश्रयः समुद्रः जविना आशासक्तजनेन आशुगेन उपान्ते रजः जृम्भयन् तेनैव उग्रतमः सृजन् शुभदृशामपि आन्ध्यं आपादयन्, अनिशं अन्तस्तम्भित सत्ववृत्तिः[1] संसारवाराशिवत्[2] त्रिधामनगरीप्राप्तौ प्रत्यूहीभवति ।

उत्तुङ्गोर्मि-कर-अनुषक्त-विलसत्-चक्राङ्कशङ्खः स्फुरद्रत्नौघावृतगात्रवासि-अनिमिषः, फेनानुलेपोज्वलः, स्वासवतैः जलसञ्चयैः अपि महापापानि निर्मूलयन् योगीन्द्रजिह्वोत्सवः वार्धि कृष्ण इव इह द्वारवत्यां परितः अवति ।

सच्चक्रा[3] करपुष्टरम्यकटका,[4] भोगीन्द्रभोगास्पदा,[5] नेत्रस्थानगत

---

1) अन्त जलाभ्यन्तरे स्तम्भिता सत्त्वाना मत्स्यादीना वृत्तिः यस्य स ।

2) संसारसमुद्रोऽपि भगवत्प्राप्तौ विघ्न तत्रापि आशासक्तः लोभासक्तः जना एव आशुग । तेन दातृणा उपान्ते रज रागातिशयमूल रजो गुण उज्जृम्भित. । तेनैव याचकजनेन उग्र तम — द्रव्यालाभे तमो विकारं कोपं सृजन् । अन्तस्तम्भितसत्वगुणवृत्ति । संसार जलौघाश्रय (जडौघ) मूर्खसमूहाश्रय ।

3) पुरीपक्षे—सतां चक्र यस्या सा । विष्णोराकृतिपक्षे—सत्चक्र सुदर्शनं यस्या ।

4) पुरीपक्षे—करेण राजभ्य समाहृतबलिरूपद्रव्येण नतु कोशस्थद्रव्येण पुष्ट रम्य कटक सेना यस्या. सा । अन्यत्र करेण हस्तेन पुष्टानि कटकानि करभूषणानि यस्या सा ।

5) भोगीन्द्राणा विलासिश्रेष्ठाना भोगस्य विषयभोगस्यास्पदम्, भोगीन्द्रस्य शेषस्य भोग एव शरीरमेव आस्पदं शयनस्थानं यस्या ।

इन्दु-इना[1], कनकमद्वप्रातिपीताम्बरा, स्वोदरवासिहंसगमना[2] सुधर्मा वहु लक्ष्मीधरालिङ्गिता[3] सेयं पुरी विष्णो: आकृतिवत् समुद्रहृये भाति।

ये विलासिन: पुरा स्त्रीसङ्गेन ताम्रनयना: सन्त: पुरारे: रिपुणा कामेन अनये ग्राम्यधर्मे सङ्गता स्म, तेऽपि अत्र द्वारवत्यां वर-अल-कान्तया कान्तया सह रेचकादिभृत: सन्त: तेपिरे। तस्यां द्वारवत्यां बहुमानयुक्ता बुधा बहुमानयुक्ता: विदग्धाश्च चरन्ति। मत्ता: बहुशस्तरङ्गा: गजाश्च बहि: सिन्धो: बहुश: तरङ्गाश्च चरन्ति। अस्यां द्वारकायां अङ्गनाल, अलकावलिभृङ्ग, मन्दहासमधु मन्मथबाण अमलं मुखपद्म बिभ्रती अङ्गना अलं जगद् वशयितुम्। मुनय: यं कृष्णं मनसाऽपि न अनुययु तमपि कृष्णं लब्धुं अनसा च्यय दधत् जन: जायया सह इमां द्वारवतीं पुरीं उपैति यया सहजा कृष्णदर्शनप्रतिबान्धिका प्रकृति: विघटिता। यस्यां रमा पर आश्रमं आप, तत्र जन: दिवि निवसन्निव सर्वदा सर्व-दान्त: श्रम मा सवेत्ति। इह द्वारकाया कृष्णस्य भटा ईश: यथा कृतयुगान्ते नवीनमार्गे विशत: निवारयति तथा द्वारावतीं विशत: विवारयन्ति। न चेत् वृका: अमार्गे विशत: आर्तान् अवीन् इव इह नवीनमार्गे विशत: कृतान्ते क्षिपन्ति। सा द्वारवती कोपिनि शान्तभाव तनोति। तस्यां पुर्यां य:कोऽपि मन:सु निशान्तभाव तनोति। तस्यां खगाश्च कल-शालि-कण्ठा: गृहाश्च भास्वत्कलश-आलिकण्ठा:।

यस्या भित्तिस्थेषु रत्नेषु फलितै प्रतिरूपचित्रै: चित्रा मुरजिल्ल-नानिवामा: सुशोभिनवरत्नरुचा रङ्गानुषङ्गरमणीय प्रदेश दधाना

---

1) पुरीपक्षे— प्रासादाना किञ्चिदवरिभागे स्थितौ इन्दु-इनौ चन्द्रसूर्यौ यस्या। अन्यत्र—सूर्या-चन्द्रमसावस्य चक्षुषीतिश्रुते: नेत्रयो स्थाने गतौ चन्द्रसूर्यौ यस्या।

2) स्वोदरे वासिन्य हंसगमना नार्य यस्या, स्वोदरे स्वोदरस्थनाभि-कमले वासी हंसगमन: ब्रह्मा यस्या,।

3) लक्ष्मीधरेण श्रीकृष्णेनालिङ्गितापुरी, लक्ष्मीधराभ्या देवीभ्या आलिङ्गिता विष्णोराकृति।

इव विभान्ति । यत्र सौहार्देन नृत्यदुरुकेकिनां नि:श्रेयेन शोभिसौधेषु रुचिराचलशृङ्गबुद्धया ससवत स्वस्वधिगात्र अभ्रनिचय परित: पतन्त्य पताका: मरुत: अजयन् । तस्यां द्वारवत्यां बुत्रा सुवर्णवरवेष्टनभाजि, तेजसा प्रद्यातिताम्बरे. हरिन्मणिविद्रमाद्यै. नवै नवविधै. रत्नै: खचिते प्रासादमूर्ध्नि कपिशीर्षनाम न सहन्ते ।[1]

यति: भोज्यमात्रान्नमात्रात् अन्यत् न नयति अस्यां द्वारवत्याम् । रतिभर्त्रा प्रेरित भोगं नैव चरति च । अजनि-मतङ्ग. च अन्ते ऽनि सन्तरत्येव । अभयाप्त्या स्वस्थवृत्ति: यमभय न वेत्ति ।

अत्र पुर्यां काचन कामिनी वैरिवध्वा. कपोले नवहृति अवलोक्य श्वासे विश्रान्तवाक्या सती हृदि तोष न वहति । समुदितरवे दृष्टचा जातव्रीडेन विभ्रान्तनेत्रा समुत् इतरवराङ्गी भावमाविष्करोति ।

अस्मिन् पत्तने सिद्धा अहि ईश. क (ब्रह्मा) इत्येतेषा न्यास कलाया: अर्थरूप उदार कृष्ण महीशकन्याना षोडशसहस्रसख्याकानां सकलार्थरूप विहायसा आलोक्य अन्ते दत्त उदार सालोक्य विहाय मुदा रमन्ते । अत्र द्वारवत्यां मदिरापानेन अदभ्र मत्ता अचित् या नारी रविशङ्किनेत्र प्रायोजयत् सा यानगर्धे: नगवत् धीरचित्त तं पुरुष प्राय: अजयत् ।

अस्यां त्रिलसद्भि हारै सरै. सारशिरोधरा: सरसा नार्य. नय-नैपुण्याभ्यां जिष्णुभि. नयनै. जनान् वशयन्ति । यत् कृष्णसङ्गतवधूषु ललामलेपै तदध्य नेन धूतदुरितेषु पुरुषेषु च साम्य वितनुते तत् सेयं पुरी विषयोपभोक्तु विषयोज्झितस्य च फलेन प्राय समतां वितनुते । इह नवोष्ठे नव दन्तक्षतं वीक्ष्य सपत्न्या दुरन्ता चिन्ता समभूत् । तन्वी अन्या तदाच्छादनयुक्तिशून्या मुहु: दैन्यं दर्शयति ।

य: श्रीकृष्ण: द्विजवराणां सभायां आराधितानां नारदादि-मुनीनां वाचा अल कीर्तित , य सुप्रगीत: सन् चित्फलं जन्मान्ताद्येनसां

1) प्रासादाग्रे कपिशीर्ष—हलायुध ।

विहृतिं रचयति, य ससाराख्यरुग्भेदी, प्रौढसद्वाग्मिषु विविधसुवाणी- विलासैः प्रतर्क्यं य आदौ तथा अन्ते विमलयतितते जल्पशुद्धौ सहायः शस्तः सः कृष्णः अस्यां द्वारवत्यां अस्ति ।

रोम्णां हर्षणकारिणि श्रवणतः पापौघविध्वंसिनि
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते
सर्गः सप्तदशो मुदामयमभूत् स्वर्गीश्वराणां कुले ।।

---

## अष्टादशः सर्गः

रक्तात्मायतरुग्विषा [1] प्रविलसत्स्त्रीयोर्ध्वनागश्रिया [2] स्वच्छेन्दुच्छविवृतसन्नखरुचा [3] स्वासन्नभूषावलेः अद्भुतरत्नबन्धनमहः यच्छन्ति सन्ति दम्पत्योः श्रीरुक्मिणीकृष्णयोः पदपङ्कजानि भजतां ध्रुव सम्पत्कराणि ।[4]

लक्ष्म्याः स्तनयोः स्फुरितस्य कुङ्कुमरूपपङ्कस्य सङ्गिनि, भक्त्या स्मरतां मुनीनां मनःसरसि निरूढ, उत्तुङ्गरम्यताख्य मौक्तिक पुञ्जस्य शोभावति, रक्ताङ्गुलीदलपङ्क्त्या कान्ते, प्रीत्याक्वणद् वदनानां हंसानां कदम्बवत् जृम्भिणीभिः मुक्ताफलोल्लसिताभिः किङ्किणीमुख्यभूषाभिः शोभिते, तद्भवनजातानां कविभीर्गीतानां

---

(1) पद्मरागरत्नसम्बन्ध उक्त ।

(2) इन्द्रनीलसम्बन्ध ।

(3) मुक्तामणिसम्बन्ध ।

(4) आश्रितानां अचेतनानामपि भूषणानां सम्पत्कराणि किल किमु भजतां चेतनानाम् ।

मनोज्ञरेखाणां कल्पे. ध्वजाङ्कुशयवाशनिलक्ष्मभि लक्ष्ये, विमलबोधाख्यस्य दिनेशस्य भासा उन्मीलिते, सन्माननीयगुणभाजि कलङ्किदूरे, सौरभ्यलुब्धपवनेन सदा परीते, कारुण्याभिधमान्यमकरन्दमहाप्रवाह युते नित्य अनुषक्तानां निजभृत्याना विलोचनाख्यैः मत्तैः अनुरक्तै मधुपैः सततं गृहीते सत्कर्णिकावत् उज्ज्वलतलस्य कान्तिमति, कृष्णाङ्घ्रिचारुकमले मम चित्तभृङ्गः सन्तत स्यात् ।

य कृष्णपाद भक्तानां समीहितस्य धनस्य प्रत्यर्पणेन शङ्ख-अम्भोजनिधी, हस्तिनीनां आन्तरस्य कर्षणेन अङ्कुश, दितिजानां प्रध्वंसनेन अशनि च निर्जित्य उत्पताक ध्वज अदधात्, ते शङ्खाम्भोजादयोऽपि प्राय. तस्य पादस्य तल लक्षणगणव्याजेन भेजुः ।

"विरुद्धगतय धर्मा. अपि हरौ विरोध सन्त्यज्य बहुशः सन्ति" इति बोधयन्तौ पद्मस्थायाः चन्द्रलतिकाया द्युतिमद्भिः नखै. अङ्कितौ श्रीरुक्मिणीशचरणौ शरण ममास्ताम् । शशाङ्क मूर्ध्न्यर्पितस्वसदृश नखचन्द्र हरिपादपद्म स्वस्पर्धि आशंक्य अम्बुजकुल न सहते । तत् अम्बुजकुलमपि स्वस्पर्धि तत् च हरिपादपद्म वशिना शशिना अनुरक्तं मत्वा मनसि तत्र-चन्द्रे अमैत्री अधित । "कमलया अङ्गीकृतः सदा उच्चगतिर्भवति" इति सन्दर्शनाय प्राक् कमलाया करगत पश्चात् क्रमेण कुचफालकचाग्रलग्न श्रीकृष्णपादकमल न. श्रिय कुरुतात् ।

भिन्नस्य प्रवालस्य सदृशी, कृष्णस्य पादनखमण्डल परित. स्फुरन्ती, रम्या इन्दिराया कराङ्गुलीदलचयस्य द्युति कृष्णपादाम्बुजे नखमण्डलमण्डनार्हा सहजस्य राजत अलक्तकाङ्कस्य कान्ति तनोति ।

आपूर्यमाणै. अन्त समापूरितस्य बह्वनन्तसौन्दर्यस्य शेषैः इव पुष्टोर्ध्वभागे, परित. सुवृत्ते तयो रुक्मिणीकृष्णयोः जंघे मम अन्तरङ्गे स्फुट स्ताम् ।

पूर्णस्य कृष्णस्य यज्जानु सानन्दस्य नन्दस्य आवसथाङ्गणे निजप्रचारै. चूर्णीकृतानेकरजः तत् जानु अद्य अस्मदीयं हृदयङ्गणस्थं एन. धुनोतु ।

रुक्मिणीमुरभिदोः ऊरू, यद्यपि सत्कान्त्या कथञ्चित् हरिनील-काञ्चनसमौ, विष्वग्वर्तुलतागुणेन हस्तीन्द्रस्य हस्तोपमौ, मदुताधर्मेण कुन्दस्तजः कल्पौ तथापि लावण्येन परं परस्परं तुल्यौ इति द्वन्द्वात्मतां बिभ्रतौ। मरुद्गणेश मुख्यप्राण समारोप्य आरञ्जयन्तौ मुरारे. ऊरू मे सुख दिशताम्। स्व-अरातिनः रक्षस. हिरण्यकशिपोः क्षयस्यमू लभूमी तौ मम वैरिव्रजं संहरताम्। य अपगतनिजलाभः स्वाश्रितायाः रमायाः अपरिमित सुखौघ विधत्ते। स्वाश्रितस्य वासस पीताम्बरस्य शतगुणित विकासं सन्तत विधत्ते सः मुरभिदूरु. वैश्यजातेः कारणं किल।[1]

भैष्मीमुकुन्दयोः, सुवर्णवर्णेन अम्बरेण भासि काञ्चननीलगिर्योः सुसान्द्रस्य सन्ध्याघनस्य सङ्गि शृङ्ग इव उल्लसत् कटिद्वय नः पातु।

चिन्मयस्य हरेः पीताम्बरेण अलङ्कृत अग्र्यरत्नैः स्यूतै. स्फुरद्भिः किङ्किणिमेखलाद्यैराभरणैः जातप्रभं पीनलसन्नितम्ब हे चेतः सदा चिन्तय।

आपादपद्मं परिलम्बमाना रमायाः नीवी रमणीयायाः काञ्च्याः विष्वक्स्फुरद्रत्नगणस्य मध्यलक्ष्म्याः विनम्राः भास इव भाति।[2]

यत् उदर व्रजभुवि न बद्ध आसीत् तत् मुरारेः उदरं अधुना भीष्मपुत्र्याः पुलकितकरचारुप्रेमदाम्ना सन्तत निबद्धम्। प्रभुरपि उदारैः प्रेमभारैः वशमेति।

कृष्णस्य वलिः त्रित्रा उदरगता अङ्कस्थितायाः उदधिसुतायाः उच्चकराङ्गुलीनां कान्तिरिव विरेजे। तन्वी रोमलता च नाभिं प्रविश्य शनकैः उदिता तदीयनेत्रकान्तिरिव विरेजे।

---

(1) वैश्या हि लाभार्थमेव क्रयविक्रयादिक कुर्वन्ति। अयन्तु मुरभिदूरु. अपगतनिजलाभोऽपि अन्यस्मै वृद्धि तनुते। अतः अस्य वैश्यजाते· कारणत्व कथम्।

(2) पादकान्त्या विनम्रा काञ्च्या कान्त्या भासः पाद शरण गताः काञ्च्या अधोभागे लम्बमाना नीवी सुवर्णवर्णत्वात् काञ्ची-प्रभावद्भाति।

सुवर्णवर्णस्य उदरस्य मध्ये लग्ना इन्दिरायाः मनोज्ञा रोमावलिः वक्षोजद्वयोः करीन्द्रकुम्भयो युगात् अवतीर्णा मदवारिधारा जिगाय। अब्धिदुहितु · मूर्द्धा वलि तन्नाभिवापीतटात् विलसत्कुचाचलयोः तटीद्वन्द्वान्तरस्य प्राप्तये उद्यान्ती, मध्ये व्योमवशात् अलब्धसरणि सद्रोमावल्याख्यां नीलरत्नतिलका धर्तुं विधात्रा कृतां अष्टापदस्य यष्टि स्पर्धते।

हे चित्तमीन, श्रीभुवोः कटाक्षोत्पलयुत अब्जभूद्विरेफस्य अम्भोजस्य आश्रयं वृत अगाध अच्छशोभाम्बुपूर्ण अच्युतस्य नाभिह्रद विश।

उद्दीप्तहाराणां अन्तररत्नकान्त्या हृद्यं, मनोज्ञेन उदरबन्धेन बद्धं, त्रिवलि, विश्वपित्रोः रुग्मिणीश्रीकृष्णयो. तत् कृशोदरं न त्रिकालं शर्माणि निर्मातु। तौ गर्भस्थसर्वभुवनौ अपि इदानी प्रद्युम्नस्य-कामस्य जनकौ इति सूचनाय विश्वैकमन्दिरमपि मन्मथस्य गात्रमात्र दधत् तदीय मध्यं मुदे भवतु। सत्तर्कमात्रेण कलित, सकलानां अपवर्गदं तस्य रम्यात् नाभिविवरात् अभ्युदितस्य अम्बरस्य[1] उपरिष्टात् पद्मोपभोग्य परिमाण इव स्थितं मधुकैटभमर्दनस्य मध्य मुदे भवतु। यस्मात् शिक्षितधियः कवयः अपि लक्ष्मीमुकुन्दयोः तनुवृत्त मनोज्ञ मध्यं उद्वीक्ष्य अधुनापि 'अस्ति किं न कि' इति सन्दिहते खलु तस्मात् एव मध्यं सन्दोहसज्ञितमभूत्।[2] यत्कृशत्वमुद्वीक्ष्य तत्पूर्तिविधित्सया इव पद्मा कराब्जेन सदा आलिलिङ्गे तत् मनोज्ञ मृदुल सुवृत्तं कृष्णस्य मध्यं मम बुद्धौ सदा तिष्ठतु।

सपत्नीनां वक्षोजात् लब्धाङ्कमपि यत् लक्ष्मीः चिर नैव तत्याज मुरारेः तत् सद्वर्ण्यलावण्यगुणैकधाम वक्षः सुरक्षा कुरुतात्। आलिङ्गितायाः प्रियतमायाः कुचकुङ्कुमाङ्केन लक्ष्यं वसुदेवसुतस्य वक्ष. मत्त-

(1) "नाभ्या आसीदन्तरिक्ष" इति श्रुतेः।

(2) "अस्ति वा न वा" इति सन्देहसन्दोहस्य बिषयत्वात् मध्यस्य सन्दोह-सज्ञा।

स्फुरत्तारिणतद्विपस्य धातुरक्तकुम्भाङ्केन जृम्भमाणं हरिनीलविशालवप्रं जिगाय । विशाल हरिनीलनीलं लक्ष्मीगृह चन्दनचर्चितं स्फुरत्कौस्तुभस्य उद्भासकं विस्तीर्णभूषावलि विट्ठलस्य तत् वक्ष चित्तेऽस्तु ।

यच्चर्चित. नवकुङ्कुमराशिरपि पुरुषोत्तमस्य वक्षोनुलेपनमणि: आसीत् तत् इन्दिराया. सौवर्णरम्यकठशोपमितं मनोज्ञ वक्षोजकुड्मल-युगं जयति । आच्छादितोरःस्थलाख्यमूलदेश यथास्या त्तया जातस्य यस्य अखिलधर्मगोप्ता शौरिः करं यच्छति रमायाः त चारुस्तन वर्णयितु कः इश. ? मन्दहसितामृतेन शोभित, मनोज्ञमुखाख्य उद्यन्निर्मल पूर्णचन्द्रं उद्वीक्ष्य सदा मुकुलितस्य अम्बुजकोशस्य कान्ति बिभ्रत् विश्व जनन्या. रुक्मिण्याः कुचमण्डलं नः पुष्पातु । सद्वंशे जातोऽपि, सुगुणोऽपि सुवृत्तरत्नोऽपि हारः कमलाकुचान्ते अवकाशं नेव लभते । तथाहि । कठिनोपकण्ठे कुलेन किम् ? गुणौघैः वा किम् ?

युधि शार्ङ्गस्य ग्रहणे, मनोरमगुणस्य आकर्षणे, सायकस्य निषङ्गात् आदाने, सन्धानकर्मणि अपि फलिता माधवस्य चत्वारः हस्ता. रहःकेलिषु कबरी प्रगृह्य, कमलामाश्लिष्य, गण्डस्थली सगृह्य अधरा-मृतं पिबत. तस्य फलिता । कृष्णस्य स्फुरन्मरकतद्युतय, अतिदीर्घाः रम्यनखाख्यैः मौक्तिकैः शोभमाना. फलितपुष्पितपारिजात शाखा समानविभावाः विभवः कृष्णस्य हस्ताः नः अखिलार्थान् यच्छन्तु । हरेः चक्रं मर्दितदैत्यचक्रम् । शङ्ख. स्वनैः धिक्कृतदैत्यशङ्खः । पद्म च विध्वस्थरारास्यपद्मम् । सा गदा च पापगदस्य अपहन्त्री । निजप्रहर्षकरः अस्य कृष्णस्य खड्गः द्विषा असह्योऽपि नन्दकाख्यः किल । लोके वियुक्त नारी परितापकारी इन्दु आनन्दकरः न किम् ? अपारैः शरैः रिपुवर्गा दैन्यकः अस्य मुरारेः चाप त्रिनत । तथाहि । यद्वंशभवाः गुणाढ्याः समर्थाः अपि सर्वसन्धौ नता.। कटक-कङ्कण-मुद्रिकाद्यै. दीप्ता. सुदर्शन-गदा-अम्बुज शङ्खशोभाः वृत्ताः त्रिरेखमणिबन्धरुच. अतिदीर्घाः रक्ताब्ज कोमलतला. हरेः हस्ताः मम मानसे स्युः ।

पूर्णमनोरथ अपि श्रीश॰ येन अनिशं रहसि बन्धमपेक्षमाणः सन् अखिलं जगत् सहरति, स भेष्म्या क्वणत्कङ्कणरञ्जितः समस्त फलदः हस्तः मह्य अभोष्ट तनुतात् ।

वृत्ते त्रिरेखे रत्नौघदीप्ते श्रीश्रीशयो. कन्धरे विष्वक्स्रुवद्रत्नचित्रौ शङ्खशेवधो जिग्यतु । रत्नौघै॰ रम्येण परित॰, श्रितेन निजभूषणेन चिरेण दीप्तं वृत्तं त्रिरेख वरहारजुष्टं श्रीरमणस्य कण्ठ स्मर । सन्नीलो-त्पलानि, चारूणि चम्पकानि, लसज्जातयः, स्फुरन्त्य. मल्लिका., रक्तानि अशोकानि एतदादिभिः अन्यैरपि मृदुप्रसूनै रचिता, रम्याब्जराजन्मुखी विभोः माला, मुक्ता-नोलमणि- प्रवाल-विलसन्माणिक्य- हेमोज्ज्वला भर्तुः असंयोर्रपिता रुक्मिण्याः करलता इव आभाति ।

बन्धोज्झितायाः अपि सिन्धुपुत्र्याः माङ्गल्यसूत्रं किल नित्य-बद्धम् । तथाहि । मुग्धाबलायाः मोहनकण्ठयोगे मोक्षोऽपि अनाकाङ्क्षित एव नूनम् । अब्जदलायताक्ष्याः रुक्मिण्याः कण्ठदेशधृतं यत् प्राक् न व्ययुङ्क्त, न वियोक्ष्यति नो वियुङ्क्ते तत् मङ्गलदेवतायाः सन्नीलरत्न ॰चिरं माङ्गल्यसूत्र इह सन्तत अस्माक श्रियै स्यात् ।

चन्द्रः हरिण दूरे विधूय सुभग तदीयनेत्रं स्वबिम्बखचित वित नोतु । तथापि शुचिस्मितस्य लोलालकस्य कमलाच्युतयोः सन्मुखस्य साम्यं न समेति । श्रीनाथस्य गण्डद्वय माणिक्येन सशोभिमुख, सदा अन्त.शाणागमेन उद्भासितैः मौक्तिकैः आढ्य मानार्हनीलोत्पलसत्करण्ड आजिगाय । श्रीरमणस्य चन्द्रोपम सौख्यसन्दोहदं ओष्ठभासा रञ्जितं, सौन्दर्यदुग्धाब्धेः फेनकल्प, मन्दस्मित नः अघं मन्दयतात् । स्वच्छा मृदुस्मितस्य दशायां प्रकाशितैकदेशा, लक्ष्म्याः कपोले ललितस्य क्षतस्य हेतुभूता, सत्कुन्दकुड्मलसमा निबिडा कृष्णस्य रम्यरदनावलिः मम अन्तः आविरस्तु । सन्मान्यलावण्याख्येन मरन्देन सान्द्रं, अम्लानचम्पक सम्पत् लसदुन्नत सौम्यस्य अच्युतस्य नासापुट सन्मानसे स्यात् ।

व्यक्तै. अतिकोमलैः मनोरमवर्णैः पूर्णं अत्यर्थवृत्ति, मधुरस्वरं अत्यगाध सतां क्लेशाख्यदुर्विषस्य शमे अमृतकल्प हरिवचः निजं तत्वं मां परिबोधयेत् ।

नानाविधै अनुपमै रत्नै. विचित्रिताभ्यां मीनोपमाभ्यां उज्ज्वल हिरण्मयकुण्डलाभ्यां सुभग श्रीनाथस्य कर्णयुगलं भवात्यां दीनस्य आश्रितस्य मे इमां गिर शृणुतात् ।

अम्भोजस्य कोमलविशालसुदीर्घपत्रवत् सम्भासमान, अलिराज वत् शोभमानाधीरतार, शम्भुप्रभृतिभि अमरै. वाञ्छितवल्गुवीक्ष जृम्भत् मुकुन्द नयन मा मुहुः ईक्षतात् । वक्रालक मणिमयोज्ज्वलपट्ट-बन्ध कस्तूरिकातिलकभूषित विस्तीर्णं ईषदुदितालिकयुग्मं अच्युतस्य ललाट अस्माक फाललिखितं इष्ट कुरुतात् । श्याम, त्रिवक्रं, विधिमुख्य देवानां साम्राज्य विश्राणनहेतुलीलं, कामाग्रचवापाकृति कामतातस्य कृष्णस्य भ्रूमण्डल नः अघ खण्डयतात् ।

रमा यदुदितरसलुब्धधीः सती कृष्णस्य उरसि आननपद्मचुम्बि वेणौ अवात्सीत् सः मुरारेः प्रवालकान्तिः मृदुलतरः सरसः अधर. यशसे भवतु ।

यत्सम्भवामृतकणेन फणीन्द्रतल्पः स. कृष्णः नित्य अजरामरणः बभूव सात्वतराजस्य तस्य राज्ञ्या· रुक्मिण्याः सम्पक्वबिम्बसम. रम्य तमः अधरोष्ठः सतां सम्पदे भवतु । कृष्णः यच्चुम्बन विरचयन् विगता-न्यतृष्ण. सरस नित्यतृप्तश्च बभूव, किल, सौवर्णरम्यफलकोपमितः कुण्डलरञ्जितश्रोः रुक्मिण्याः कपोलः सौभाग्यदो भवतु ।

रोम्णा हर्षणकारिणि श्रवणत पापौघविध्वंसिनि
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते
सञ्जात सुरमण्डलीषु महित सर्गोऽयमष्टादशः ॥

---

# एकोनविंशः सर्गः

प्रियवशीकरणे उचितस्य, वश्यकर्मणि अर्हेण रक्तरसेन रचिताक्षरस्य कनकयन्त्रवरस्य प्रभा मुष्णन् दन्तक्षतं कृतपद देव्याः रुक्मिण्याः गण्डस्थल प्रविभाति। मुरवैरिपत्न्या नासाविभूषणमणिः अन्तर्निगूढेन कनकेन अङ्कुरितानननोऽपि मुक्तामय.[1] किल। सदा मनोज्ञवधूनां सुधार्द्र बिम्बोष्ठचुम्बिवदनस्य जनस्य आमयः क्वास्ति? मुक्तात्मकोपि[2] रुक्मिण्याः मृदुले ओष्ठपुटेऽनुषक्तः नित्यं तस्या उल्लसता अपाङ्गशरेण भिन्न नासविभूषणमणि. परिलम्बते। एतस्याः देव्या अच्युतवशीकरणे प्रयासः किम्। नासाख्यचम्पकभिया चलितस्य, नेत्राख्ये चार्वम्बुजे अर्पितहृद समुत्सुकस्य च अधीरजवस्य भृङ्गस्य सम्पद मुष्णन् यदुपुङ्गवशाङ्ग्याः अपाङ्ग. लक्ष्मी तनोतु। रुक्मिणी स्वर्वाङ्गी। वरनील रत्नसदृशाङ्गा। प्रवालवन् उल्लसत्पादा। स्मिताख्यमौक्तिकवती। मरकतस्कन्धवत् विराजमाननीलाजटा। वैडूर्यग्रचनखा। नखक्षताख्य माणिक्यपुष्पाढ्या। ओष्ठाभिधगामेदयुक्ता। रदाह्ववज्रकान्तिमती। अस्यै रुक्मिण्यै श्रीपतिः सुरतरु न ददौ।[3] लक्ष्म्याः मनोज्ञे काये कार्श्य अस्ति। कचभरकरयो. लम्बमानत्वदैर्घ्ये स्त। चक्षु-मध्य-ऊरुदेशेष्वपि अधिकचपलता-अदृश्यता-मार्दवानि च क्रमेण सन्ति। किन्तु द्विरदस्य परिलसत्कुम्भयो शोभापहारिणि लक्ष्म्याः कुचकलशतटे तत् ते तानि नास्ति नास्तो न सन्ति। श्रीश्रीशयोः नीलनीला भ्रूमध्ये लग्ना मृगनाभिललामरेखा, शाणोपलस्य उपरिगत रणधीरस्य मारस्य चापानुषक्त असित उत्पलाख्य च बाण अनुकरोति। नित्यं परस्पर मनोरमगात्रसङ्गात् मत्ताल्या, रक्तसरसीरुहस्य च कान्तिमन्तौ जगदादिपित्रोः लक्ष्मीरमारमणयो कटाक्षौ अस्माक ईप्सितफल कुरुतात्। कपेन रवता

(1) मुक्ताफलात्मक, मुक्त आमय व्याधि येन सः।

(2) मुक्ताफलात्मक, मुक्ति प्राप्त।

(3) रुक्मिण्या एव नवरत्नात्मकत्वात् नवरत्नमय सुरपारिजाततरुं तस्यै न ददौ।

रमारामयोः कटाक्षलक्ष्मीः अस्मदमित्रवर्गं लक्षीकरोतु । विधिशर्व-पूर्वाणां सौभाग्यदात्री सैव अनुरक्ता शरणागतं मां लक्षीकरोतु । मुकुटाख्यरवेर्भयात् अव· लम्बमानं, मुखेन्दोः प्रवलिसता उरुभासा उन्मुखं च तयोः रुक्मिणीकृष्णयोः मुखस्थं कुटिलं अलकराशिं कर्ण-नीलोत्पलश्रिया परिहृतनिजदैन्यं अन्धकारं तर्कयामि । उत्तुङ्ग-नील चमरीमृग-वालभारकल्पं स्फुरद्भिः विविधरत्नैः लसत्किरीट धरन्त, उत्फुल्लपुष्पाणां आकर, उज्ज्वलन्तं कमलाच्युतयोः मौलिदेश नित्य स्मरामि ।

स. विभुः द्वारावतीवल्लभः कृष्णः इत्थं जाम्बवतीं उवाह । सल्लक्षणा लक्षणां उवाह । सर्वगुणाकरां सत्यभामां, उवाह । शशिमुखीं नीला उवाह । नीलालका कालिन्दीमुवाह । कलकण्ठकण्ठनिनदां स्वा[1] मित्रविन्दां उवाह । भूमिसुतेन नरकासुरेण आहृता बहुश बालाश्च उवाह ।

हे मानवाः मुरभिद सर्वोत्तमत्वे कस्मात् मुह्यथ ? पुरा य भूभारहरणे अक्षमैः पद्मासनधूर्जटिप्रभृतिभि. प्रार्थितः, गर्भे गीर्भिः अभिष्टुत, फणिफणे नृत्यश्च य. सेवितः सद्वेगु रणयन् च नम्रतनुभिः पद्मासनादिभिः विस्मित ईक्षितः श्वफल्कात्मजः अक्रूरः अपि कृष्णाया ते देवे नतः परिवृन य दृष्ट्वा गुणैः अबद्ध इतरान् बद्धान् स्फुट उदीर्य तुष्टाव । सैव तुष्टहृद देवनिकरात् अप्राप्तमुक्ति, तं निद्रिताय अपि मुचुकुन्दभूमिपतये यः प्रभुः प्रादात् य. कलशांघ्रिपं आहरन् सेश्वरान् सुरवरान् व्यद्रावयत् यश्च पुरा भस्मीकृतभस्मदानवपतिः शम्भुम-पालयत् । योगीन्द्रादृतवैभवः भृगुमुनि. यस्य श्रैष्ठ्यमस्पष्टयत् । हे कैवल्य-कामाः जना. तं अजित मधुजिन कृष्ण भक्त्या भजत ।

कैलासयात्रादिभिश्च अस्य कृष्णस्य ऊनभाव. यदि तर्हि भवदीय ऐक्यवचः वृथा स्यात् । भवता[2] लीला इति व्याघ्रम्प्रत्य तु पौत्रलयप्राप्ति

(1) मातुलपुत्रीत्वेन स्वाम् । भद्रामपि उवाहेति शेषः ।

(2) ऐक्यवादिना

उपेक्षयामः । युधिष्ठिरस्य आलयं एव गच्छत् द्विजातीन् यमिनः समर्च-यन् अयं कृष्ण. ततोऽपि नीचः किम् ? नृलोके इदं सर्वं हि नरानुकारा-र्थम् । अस्मिन् विषये विपरीतभावे[1] यदि शङ्का तदा आत्मलोकात पयोब्धितीरं व्रजतः विधातुः, स्वालयान् कैलासात् गतस्य शिवस्य च अनुसरणीयाः नराः सन्ति किम् ? स्वस्थानेषु सत्यलोकादिषु संस्थैः ब्रह्मादिभिः रचिताः समस्ताः पूर्वोक्ताः क्षीरसमुद्रगमनादयः अर्थाः नराणां दृष्टिगम्याः किम् ? अत्रापि मनुष्यलोके अदृश्याकृतिभिः मुनीन्द्राणां विज्ञानदृष्टेरपि दूरदूरैः देवैः रचिता अर्था नरदृष्टिगम्याः किम् ? पुरा उग्रभस्मासुरघातकाले नरानुकारस्य युक्तिः काऽस्ति ? सतत्त्वविचारहेतो वैकुण्ठं गतस्य भृगुमुनेः च मर्त्यानुकृतिः किमर्था ? मर्त्यलोकं प्राप्तस्य मर्त्यानुकारः युक्तो हि । कृष्णः स्वजनस्य मध्ये नरदृष्टिमार्गे विज्ञाप्य[2] कैलासशैलं अगमत् आगमच्च ।

स कृष्ण प्रागेव निजनाभिजातात् कुशेशयात् पुत्रं चतुर्मुखं जनयाम्बभूव तदा तदीयस्य (चतुर्मुखस्य) कालान्तरे जातः वरस्य दाता शिवः कुत्रासीत् ? यस्य कृष्णस्य वाहिनीभूतस्य गरुत्मतः ओजः पिनाकपाणिं विद्रावयामास तस्य 'शिवस्य प्रसादात् सः कृष्णः सुतं जगाम' इत्युक्तिः न विद्वज्जनमाननीया ।

सर्वसुराग्रगण्यः पापौघतमिस्रभानुः कृष्णः 'मदन्यसेवा ऐहिक-कामदात्री' इति उदीरयन् स्वपौत्रयात्रा विरचय्य मन्मथं सूनुं अवाप ।

आनन्दाम्बुधिमग्नमूर्तिः[3] सा कमला उदयन्मोदाश्रुधाराजल[4]र्तुः कृष्णस्य अंघ्र्योः प्रणिधाय स्वकायाख्यकनकं कृष्णार्पितं[5] अतनोत् या च तस्य कृष्णस्य गात्राख्यहरिन्मणि करवश[6] चक्रे, या च विमुक्त-

(1) नरानुकारार्थं ब्रह्मादय श्रीहरिं शरणं गता इति ।

(2) मया कैलासशैल गम्यते । तावत्पुरीयं रक्षणीया इत्याद्याघोष्य ।

(3) समुद्रे कृतस्नानेति ध्वनिः ।

(4) दानोचितं धारजलम् ।

(5) सुवर्णदानम् धर्मप्राप्तिः ।

(6) अर्थप्राप्तिः ।

कबरी[1] सती स्मर[2] गर्भे दधार अनया रुक्मिण्या को वा अर्थः अनवाप्त ? गजरम्यगतिः अब्धिपुत्री तन्वी रुक्मिणी मध्ये मनोज्ञमदनात्मक गर्भं स्वकान्तात् बभार । हृदयङ्गमस्य मर्त्यैः अनुकारिचरितस्य तस्य तं एव (काम एव) तदयोमत्त्रकिते स्वीयहृदि अपि बभार । अथ भैष्मी जितारेः शौरे. अनुरूपरूप मारं कुमारं सुषुवे–प्राचीदिक् रोचि शतैः पूरिताश प्राञ्त्रां सुवाचां विषय दिशेशं इव । यः मन्मथः कृष्णस्य कर्णे निजचिन्हं मकर[3] ,उन्नतशरान्[4] दन्तोष्ठ-दृग्-दोः-पदे, मध्यतनौ स्वाङ्ग[5] , भ्रुवो. वरधनु., कसत्कुन्तले मौर्वीं, वनमालायां मन्त्रिण, आनने सुहृदं चन्द्रं, वाक्ये शुक च अर्पयित्वा तस्य कृष्णस्य गात्र रचयाम्बभूव सः स्मर. तस्य कृष्णस्य सुतोऽभूत्किल । तारुण्य-लावण्य-सुवीर्य-धैर्य-कारुण्यमुख्यैः द्रविणै. प्रकृष्टः असौ रुक्मिणीकृष्णयोः कुमारः प्रद्युम्नस्य मुख्यांशयुतः प्रद्युम्ननाम्न[6] अर्थ पिपर्ति । हरेः सुतः सः प्रद्युम्नः रुग्मिपुत्रजां रुग्मवत्यां आत्मजात अनिरुद्धं अजीजनत् किल । या अमलहेमकल्प तं असूत असौ रुग्मवतीति स्वनाम उचितमेव बभ्रे । आजौ सपत्नानां सैन्यैः अनिरुद्ध, सदा आश्रितजनेभ्यः अभीप्सितस्य वित्तराशेः प्रदानकाले अपि अनिरुद्ध त रुग्मवतीपुत्रं अनिरुद्धसज्ञ आमनन्ति । स च अनिरुद्धं उषाभिधाया स्वपत्न्या वरिनगौघवज्रं वज्रसंज्ञं उदयाद्रिः उषसि तमस्समुन्मूलन उज्वलन्तं अशीतांशु इव अजीजनत् ।

य. क्षितौ पृथिवीपतीनां राज्ञा मौलिरत्नैः घटितश्रीपादपाठः, यः दिवि स्वर्गीश्वराणां फालमण्डनकरश्रीपादरेणुः य. श्रेयःपथ-पान्थानां सज्जनानां मनःपाथेयगेयोदयः तस्य श्रीकृष्णस्य सेयं असमा

---

(1) मोक्षाख्यपुरुषार्थमिति ध्वनिः ।

(2) कामाख्यपुरुषार्थमिति ध्वनिः ।

(3) मकरकुण्डलधरत्वात् ।

(4) मल्लिकाचूतेन्दीवरारविन्दाशोकाख्यान् ।

(5) कामस्य शून्याङ्गत्वात कृष्णमध्यस्य च अतिसूक्ष्मत्वात् शून्यत्वम् ।

(6) प्रकृष्टं द्युम्नं द्रविणं यस्य स प्रद्युम्नः ।

द्वारावतीपुरी प्रियतमा बभूव । मणिमञ्जुमौलिना विद्योतितशारदशक: आद्य: पुमान् आर्यै. वृत: स: देव: कृष्ण: अद्यापि मध्येसमुद्रं भैष्म्या समं तां पुरी भासयन् आस्ते किल । शरीरिणां सर्वपुमर्थसार्थंकरी कुशलैक-गम्या प्रशस्तकीर्ते. कृष्णस्य प्रथिता सेयं कुशस्थली पुरी (द्वारावती) मदन्तरङ्गे नरीनर्तु ।

वन्दारुभि: द्विजवर्यै: वाञ्छितनिजध्यान: क्षमाया: शङ्कर: सर्वाग्मिनां व्रजै: वर्ण्यदिग्विततिकुङ्कमौघराजत्करी, रुद्राणीपतिमान्य-राजितगति: सत्यासहाय: सतां वरद कृष्ण: स्वबन्दुभि: रुचिरां तां अद्भुतां द्वारवतीपुरी रक्षन् रेमे । कृष्णस्य उदयवर्णनै: सुचरितस्तोमानां स्तवै: कृष्णस्य सूक्तिभि सुश्लोकैश्च सुभगा, स्वानन्दसर्गै. विविधै: रसैश्च वृता, दुष्टागम्यै: निज थैं तोषितखगा विष्वक्सुवर्णोज्ज्वला सा विठ्ठलपुरी अस्या कृते.[1] वैखरी बिभ्राणा इव विभाति ।

यस्मिन् मङ्गलदेवता अखिलजगन्माता रमा नायकी, पद्मा–पद्म–भवादिसेव्यचरण: तस्या वल्लभो नायक:, अश्वग्रीवस्य दयापयोब्धे फलित प्राग्र्योक्तिरत्नोज्ज्वल तद्दासानुगवादिराजरचितं काव्यं विभाव्य बुधै: । प्रभु: श्रीकृष्ण: रुक्मिणीशविजयकाव्यकृते मह्य स्वहस्ताख्यं कमल-चछत्र, सच्छास्त्राभिधा रम्यां राजपदवी, सुज्ञानाख्यं यानं, करयुगे मुदा स्वाड्घ्र्याराधनकङ्कणं, गले कृष्णकैङ्कर्याख्य हारं, हृदि स्वात्मान नित्यचिन्तनधन सद्युक्तिरत्नान्यपि मुदा प्रदद्यात् । हसाना हृदयङ्गम कविलसद्भृङ्गै: आदृत मौक्तिकप्रख्याग्र्यांवित, नव इद प्रबन्ध जलजं हरे: पादे, लक्ष्म्या: रम्यकरे, वर मरतते सन्मानसे अर्पितस्यात् । पवन: शारदानन्दं तत् प्रबन्धजलजं स्वहृदि कृतगुण लोके अञ्जसा विस्तारयतु ।

रोम्णा हर्षणकारिणि श्रवणत: पापौघविध्वंसिनि
प्रेम्णा चिन्तयतां विचित्रविमलश्लाघ्यार्थसन्दायिनि ।
सञ्जाते भुवि रुक्मिणीशविजये सद्वादिराजोदिते
सर्गोऽभूत्सुरमण्डलीषु सुतरां एकोनविंशो मुदाम् ॥

---

(1) रुक्मिणीशविजयाख्याया सर्वाण्यपि विशेषणानि कृतेरपि सम्बध्यन्ते ।

# IMPORTANT WORKS ON

## DVAITA VEDANTA

**Dr. D. N. Shanbhag**

1) ईशावास्योपनिषद्भाष्यटीकामालिका
(A Glossary of All Commentaries of Madhva & His followers on the Īśāvāsyopaniṣad).
2) Some Problems In Dvaita Philosophy In their Dialectical Setting.
3) Śrī Vādirāja And His Rukmiṇīśavijaya.

**In Print :**

Śrī Madhvācārya & His Cardinal Doctrines.

**Dr. K. B. Archak**

1) Śaṅkara And Madhva On The Īśāvāsyopaniṣad.
2) Upaniṣatkhaṇḍārthas of Śrī Rāghavendrayati– A Critical Study.

**Forth coming :**

1) Śankara & Madhwa on the Kāthakopaniṣat
2) Śrī Satyadharmatīrtha's Gangālaharī

**Dr. V. B Tadakod**

Gadyarukmīṇīśavijayah [Prose Version of Śrī Vādirāja's Sanskrit Mahākāvya Rukmiṇīśavijayah].

**Forth coming :**

Śrī Satyanāthatīrtha's Abhīnavacandrīkā

**Contact**

**SHRI POORNABODHA PRAKASHANA**
1, Nekar Oni, Hosayallapur,
DHARWAD–580001